द्युकामः । वलि लोपो न । अलि विधौ—यजेः क्तः, क इष्टः । "हशि च"

शब्दरत्नम् ।

दिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । इदं चासिद्धवत्सूत्रे कैयटे स्पष्टम् । द्युकाम इति । यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्ये

भैरवी ।

त्पर्यसङ्कोच इति पक्षेऽपि फलितनिषेधमादायेत्थमभिधानम् । अतिदिश्यमानो यो धर्मस्तद्विरुद्धोयः स्वाश्रयधर्मस्तत्प्रयुक्तकार्याभाव इत्यर्थः । स्वाश्रयः-आदेशनिष्ठः । कार्येति कार्यातिदेशस्य प्राधान्याभिप्रायेण । शास्त्रातिदेशोऽपि कार्यातिदेशादभिन्न एव फलत इत्यभिप्रायेण-स्वभावेति । यथा सिद्धत्वासिद्धत्वयोर्विरोधेन जहीत्यत्र "असिद्धवदत्र" इत्यनेनासिद्धत्वातिदेशेऽपि स्वाश्रयो हेर्लुङ्न भवति । असिद्धवत्सूत्रं तु शाधीत्यत्र स्थानिप्रयुक्तस्य धिभावस्य झलन्तत्वस्य बुद्ध्या प्रवृत्तिसम्पादनेन चरितार्थम् । इदम्-स्वभावसिद्धपूर्वोक्तम् । न च 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यत्रातिदिश्यमानो धर्मो ब्राह्मण्यं तत्प्रयुक्तकार्यविरुद्धस्याध्यापनप्रतिग्रहनिवृत्तिरूपस्य क्षत्रिये दर्शनेन भवदुक्तः स्वभावो व्यभिचरित इति वाच्यम्, तत्रापि न ब्राह्मण्यातिदेशः, किन्तु अभ्युत्थानसत्कारादिरूपस्य, तांश्चदन्यूनत्वबुद्धिप्रयोज्याभ्युत्थानाभावप्रवृत्तिसम्पादनेनातिदेशस्य चारितार्थ्यात् ।

'सामान्यातिदेशे विशेषानतिदेशः' इति हि परिभाषा लोकप्रसिद्धा । यथा 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यनेनाऽऽसनाद्यतिदेशो दृश्यते, ननु माठरकौण्डिन्यसम्बन्धिभविशेषणादिधर्मस्य । एवञ्च वत्वस्य वलत्वस्य वा हल्त्वापेक्षया विशेषधर्मत्वेन तदतिदेशो न भविष्यति, किन्तु हल्त्वस्यैव । तथा च यथमतिदेशेन 'द्यु काम.' इत्यत्र वलि वकारे लोपस्य प्राप्तिरित्याशयेन शङ्कते—यद्यपीति । हल्त्वादीत्यादिना वलत्वपरिग्रह ।

भावप्रकाशः ।

तिदेश इति मूल चिन्त्यमिति, तयोर्भेदेन नियमाभिप्राया मूलोक्तिरिति च मन्दोक्तमपास्तम्, उक्तरीत्या सिद्धान्तविरोधाभावादाक्षेपस्यासत्त्वाच्च । अत एव "स्थानिवदादेशो नाल्विधौ" इति नाल्विधि, निषेधमैव-व्यापत्तेश्च । विरुद्धेति । इद च धर्मे कार्ये चान्वेति । स्वाश्रयेति । आदेशनिष्ठेत्यर्थः । कार्येत्यनेन शास्त्रातिदेशकार्यातिदेशोऽयमिति ध्वनितमित्यन्यत्र विस्तरः । स्वभावेति । अत एव 'जहि' इत्यादौ आदेशस्यासिद्धत्वे स्वाश्रयो हि लुक् न, सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्र तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावकरणेन सफलमिति भावः । तदाह—इदञ्चेति । तद्युक्तकार्याभावेऽतिदेशस्वभावसिद्धत्व चेत्यर्थ. । अत एव 'ब्राह्मणवत्' इत्यादौ ब्राह्मण्यविरुद्धाऽब्राह्मण्यप्रयुक्तब्राह्मण्यविरुद्धमद्यपानादेर्निवृत्तिर्न युद्धादेः । एतेन तत्र ब्राह्मण्यप्रयुक्तयाजनादिविरुद्धक्षत्रियत्वादिप्रयुक्तानदभावरूपकार्यदर्शनेन व्याप्त्युनियमे न मानमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः, तयोरविरोधाच्च, विश्वामित्रे समावेशदर्शनात्, उक्तरीत्या तत्रापि निवृत्तेश्चेति दिक् । स्पष्टमिति । स्पष्टतरमित्यर्थः । अत एव कैयटोल्लेख. । "ह्रियो दीर्घात्" इत्यत्र भाष्येऽपि स्पष्टत्वात् । ननु यन्निमित्तकैकत्वप्रयुक्तोपदेशाप्रवृत्त्यानिर्देशप्रवृत्तिस्तस्य कार्यवच्छास्त्रीयस्यैव प्रत्यासत्त्या ग्रहणेन वत्वस्य "स्वं रूपम्" इत्यनेन तत्त्वेऽपि हल्त्वाद्यपेक्षया विशेषधर्मत्वेन "सामान्यातिदेशे" इति न्यायेनानतिदेशात्तस्य लोपाप्राप्तिरिति मूलमयुक्तम् । अत एव ब्राह्मणवदित्यनेन ब्राह्मण्यप्रयुक्तासनादीन्यतिदिश्यन्ते, न माठरत्वादिविशेषकार्याणीत्याशयेनाशङ्कते—यद्यपीति । आदिना वलत्वादिसङ्ग्रहः ।

सरला ।

अतिदिश्यमानधर्मविरुद्धेति । अत्र विरुद्धत्वञ्च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयमुद्रया ग्राह्य नतु तदभावव्याप्यवत्तानिश्चयमुद्रया । प्रकृते च विरोधोऽभेदवत्ताबुद्धिं प्रत्यतिदेशशास्त्रकृताऽभेदाभावरूपात्वप्रकारकनिश्चयस्य प्रतिबन्धकत्वाद्, भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वनियमात् । तदभावव्याप्यवत्तानिश्चयमुद्रया विरोधग्रहे तु 'मधुः' इत्यादौ "विभाषा भ्राजेद्" इति लुगर्थमतिदिश्यमानधे-

शब्दरत्नम् ।

तद्वाक्योपप्लुते पकारवदुकार इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम् । सूत्रवल्लक्ष्यान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः ।

भैरवी ।

[illegible]
शापे [illegible]
"स्ि [illegible] ।
यस्येत्यर्थस्य प्राप्तौ पत्वस्य स्थानितावच्छेदकत्वेन तस्योपस्थितौ तद्बाधकं पत्वमप्युपस्थितं भविष्यतीत्याशयात् । परिभाषाघटकसामान्यविशेषशब्देन यस्यकस्यचिद्ग्रहणे प्रमेयत्वादिपैवव्यान्वयिधर्मापेक्षया विशेषधर्मत्वं सर्वस्यापि धर्मस्यास्तीति कस्याप्यतिदेशो न स्यात्, अतः तद्ग्राहकवाक्यादुपप्लुतलक्ष्यसंस्कारकवाक्यघटकशब्दोपात्तधर्मापेक्षया विशेषधर्म एव विशेषशब्देन ग्राह्यः । "आशंसायां भूतवच्च" इत्यत्र भूतत्वापेक्षयाऽनद्यतनत्वत्रिशष्टभूतत्वं यथा । एवञ्च प्रकृते स्थानिवदादेश इति यदतिदेशसूचकं वाक्यं तत्र यस्यानिपवन्तदुपात्तधर्मस्यैवातिदेशो न तु तद्बाधकस्येत्यर्थो वाच्यः । स्वनुपयुक्तः स्थानित्वादेशस्य निष्फलत्वात् । किन्तु तस्मादुपप्लुतं पकारवदुकार इत्याकारकं वाक्यन्तद्घटकशब्दोपात्तत्वापेक्षया विशेषधर्मत्वमेव पत्वस्येत्यन्तच यत्से नास्तीत्याशयेन समाधत्ते—तथापीति । एतादृशवाक्योपप्लवे मानमाह—सूत्रेति । अलोऽन्त्यपरिभाषैकवाक्यतया सूत्रवल्लक्ष्येत्यर्थः ।

भावप्रकाशः ।

अत्र भाष्यादयः, उक्तवाक्यस्योपस्थितसामान्यधर्मस्तदाक्षिप्तव्यापकधर्मश्च विध्याकाङ्क्षापूरणे सति तदन्यग्रहणे मानाभाव इति तर्कमूलकतया दृष्टान्ते तथासम्भवेऽप्यत्र स्थानित्वधर्मोपस्थित्या तन्निमित्तकार्याभावेनातिदेशसामर्थ्यादन्येषां ग्रहणावश्यकत्वे विनिगमकाभावात्सर्वेषां ग्रहणमिति तयोर्भेदवैषम्यमिति न मादध्रुः, तत्पाठानुरोधेन । स्थानिवदादेश इत्यस्य तद्ग्राहकवाक्यत्वेन लक्ष्यसंस्कारकत्वाच्चद्धर्मस्योपस्थितत्वापि निष्फलत्वेन सूत्रैकवाक्यतया तत्संस्कारकवाक्यान्तरकल्पनावश्यकत्वात् । अत एव तदग्रे एव तथोक्तं तैः, तद् ध्वनयन् तथैव समाधत्ते—तथाप्येतदिति । उपप्लुते, कल्पिते आविर्भूते वा । वाक्ये इति । अन्यार्थं सप्तम्यर्थः । उपादानं ध्यानम् । वाक्यजन्यधीविषयत्वापेक्षया पत्वस्य न विशेषधर्मत्वमिति समुदायार्थः । एवञ्च वाक्ये हृत्वस्योपादाने हस्वनाशयो न तु तत्त्वमित्यत्र । तथापि अन्यत्रोपात्तधर्मापेक्षया पत्वस्य तत्त्वेन तदभावस्य वक्तुमशक्यत्वात् । अत एव समस्तोद्योतपाठसङ्गतिः । नन्वेवमपि तथा वाक्योपप्लवे एव मानाभावः । धातुवद्धिरित्यादिवत्स्वनुकार इत्यादीनां कल्पयितुं शक्यत्वात् । तथा च विशेषधर्मत्वेन हत्वादीनामिव पत्वस्यातिदेशो न स्यादत आह—सूत्रेति । आदेशविधिसूत्रेषु येन रूपेण लक्ष्यस्थान्यादेशभावस्तमादायेत्यर्थः । तथा च हत्वेन हन इव "अष्टोन्त्यस्य" इति सहकृत"दिव उत्" सूत्रे पत्वेनैव वस्य स्थानित्वमिति तदैव वाक्योपप्लव इति भावः । अधिकमन्यत्र द्रष्टव्यम् । वक्ष्यते चानुपदं किञ्चित् । इदञ्च सम्भवाभिप्रायम् । वस्तुतो विधिग्रहणसामर्थ्यात् "न ल्यपि" इति लिङ्गाच्चात्र सूत्रे विशेषातिदेशोऽपीति तत्त्वम् । ननु स्थानिवद्भावेऽपि 'क इष्टः' इत्यस्य

सरला ।

हृस्वाभावव्याप्यत्वादादन्तत्वस्य तत्प्रयुक्तः "आनः" इति जुम् न स्यादिति । सिद्धत्वादिति । अत एव 'जहि' इत्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो, हेर्लुग्न, सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम् । विशेषधर्म इति । "सम्भवति सामान्यातिदेशे विशेषानतिदेशः" इति न्यायेन विशेषधर्मातिदेशस्य निषिद्धतया हल्त्व-वर्णत्वाद्यपेक्षया वत्वस्य विशेषधर्मत्वेन तदनिदेशासिद्धिरिति भावः । सूत्रवल्लक्ष्येति । अयं भावः—स्थानिवदादेशः इत्यस्य संग्रहवाक्यतया अन्यादेशोऽन्यस्थानिवृत्तिधर्मातिदेशवारणस्य 'यूष्ण' इत्यादौ जरसादेशादर्शनेनावश्यकर्तव्यतया तदादेशः तत्स्थानिवद्भवतीत्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन 'उपस्थितधर्मस्तद्व्यापकधर्मश्च विध्याकाङ्क्षा-

(पा० सू० ६।१।११४) इत्युत्वं न । अल् चेह स्थान्यवयव एव गृह्यते।

---

शब्दरत्नम् ।

क इष्ट इति । यद्यपी रूपसुत्वे गुणेऽवादेशे च पाक्षिकलोपेन सिध्यति, तथाऽपि …े कयिष्ट इति स्यात कयिष्ट इति चेष्यते इति भाव । स्थान्यवयव एवेति । उप

भैरवी ।

स्थानिवद्भावाङ्गीकारेऽपि लक्ष्यस्य सिद्धिरित्याशयेन शङ्कते–यद्यपीति । पक्षे–लोपाभाव पक्षे । यत्तु "हलि सर्वेषाम्" इति नित्यलोपस्य वैकल्पिकलोपापवादतया क इत्येव स्यादिति, तन्न, 'हलि" इति सूत्रे चकारस्याप्यनुवृत्तिरिति स्वीकारेऽपि 'वृक्षव् करोति' इत्यत्र नित्यलोपस्य चरितार्थतयाऽपवादत्वासम्भवात्। नित्यलोपविधायकेऽश्ग्रहणानुवृत्याऽश्परत्वे एव प्रवृत्तिरिति स्वीकारेऽपि 'वृक्षव्' इत्यत्र विज्निमित्तकवलोपस्य प्राप्त्या वृक्षवादेरनभिधानाच्च । न च "लोपोव्यो" इति वलोपे "अचः परस्मिन्" इति टिलोपस्य स्थानिवत्त्वाय इति वाच्यम्, "न पदान्ताः परेऽञ्ज सन्ति, ननु चायमस्ति कर्तुं हर्तुं" इति भाष्याद्वृक्षवादेरनभिधानेन नित्यलोपविधायके यग्रहणानुवृत्तेर्निष्फलत्वात् । अत एव "भोभगो" इति सूत्रस्थम् "अश्ग्रहणमनर्थकमन्यत्राभावात्" इति भाष्यं सङ्गच्छते । मूले–स्थान्यवयव एवेति। अत्र एवकारो भिन्नक्रमः स्थानिपदोत्तरं द्रष्टव्यः । अत एवादेशावयवाश्रयणेऽपि न निषेध इत्येवद्दर्शयति–चेति ।

भावप्रकाशः ।

सिद्धिरिति नैतत्तल्लक्ष्यमित्याशयेन शङ्कते—यद्यपीति। उक्ते स्थानिवद्भावेनेत्यादि । यत्तु "हलि सर्वेषाम्" इति नित्यलोपे तत्सिद्धावपि रूपान्तरसिद्धिरिति रत्नाकरदण्डिप्रभृतयः । तन्न, नित्यलोपासिद्धतया पाक्षिकलोपस्यैव न्याय्यत्वात् । 'वृक्षव् करोति' इत्यादौ विकल्पप्राप्त्या नित्यलोपस्य प्राप्त्याऽनपवादत्वाच्च यद्रूपे हलीति व्याख्यानेऽपवादत्वसम्भावनायामपि वक्ष्यमाणरीत्या वृक्षवादेरनभिधानेन तत्र यस्यानुवृत्तेर्निष्फलत्वस्य सिद्धान्तित्वेनात्र तत्प्राप्तेरेवाभावाच्च । स्वयमपि तत्रानुवृत्तेरेवोक्तत्वेन तद्विरोधापत्तेश्च । अत एव "भोभगो" इत्यत्राश्ग्रहणखण्डनपरभाष्यसङ्गतिरित्यन्यत्र विस्तरः । तद् ध्वनयन्नाह—पाक्षिकेति । "लोपः शाकल्यस्य" इत्यनेनेत्यर्थः । चस्त्वर्थे । स्थान्यवयव एवेति । एवो भिन्नक्रमः, स्थानिन एवावयव इत्यर्थः । अत एव तद्व्याख्यानं यन्नादेशावयव इत्येवोक्तम् । अन्यथा तेन "भोभगो" इत्यत्राश्ग्रहणं सफलं भवति, विसर्गस्थानिरेफवृत्तित्वस्य, स च स्थानिरूप इत्युक्तं स्यात् । अथ तद्ग्रहणोच्चरमेवोक्त्या तद्व्यावृत्तिरपीष्टेति । तदुक्तमिति चेत्तदसमपि मन्तुमुचितमिति । तथा च न

सरला ।

पूरणे तदतिरिक्तविशेषग्रहणे मानाभाव ' इति न्यायमूलकस्य 'सामान्यातिदेशे' इति न्यायस्य सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो नतु तदव्यापकधर्मस्य इत्यर्थेन प्रकृते हल्त्वस्य यत्वस्य वा सादृश्यप्रतियोगितावच्छेदकत्वाभावाद् वत्वस्यैव तत्त्वेन तदव्यापकतया वत्वातिदेशस्य सुगमत्वादत्रमिति। स्थान्यवयव एवेतीति । तथा च स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं न भवतीति तदर्थः । तेन यत्वस्य आदेशावयवयकाररूपाल्वृत्तित्वं नतु स्थानिसम्बन्ध्यल् एकारस्तद्वृत्तित्वमिति 'रामाय' इत्यत्र न निषेधप्रवृत्तिरिति । नचैवमपि 'रामाय' इत्यत्र दोषस्तदवस्थ एव, स्थानी एकारस्तत्सम्बन्धी योऽल् व्यपदेशिवद्भावेन स एव, तद्वृत्तिर्यो धर्मः सुप्त्वं तन्निमित्तकत्वाद् दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधप्रवृत्तेरिति वाच्यम्, अल्वृत्तिधर्मेऽल्त्वव्याप्यत्वस्य विशेषणेनादोषात् । सुप्त्वस्याऽल्वृत्तित्वेऽपि श्यामादावपि सत्त्वेनाल्त्वव्याप्यत्वाभावात् । नचैवमपि 'प्रतठ्य' इत्यादौ वलादित्वस्यातिदेशापत्तिः, वत्त्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्य अल्त्वव्याप्यत्वस्य च सत्त्वेऽपि इटो वलादित्वनिमित्तकत्वेन वत्त्वनिमित्तकत्वाभावेन निषेधाप्राप्ते, इति वाच्यम्, स्थानिसम्बन्धी योऽल् तद्वृत्तिर्योऽल्त्वव्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति तदर्थस्वीकारेणादोषात् । नचैवमपि 'धमूविन' इत्यादावनिडनापत्तिः, स्थानी वश्

शब्दरत्नम्।

भावः। अग्रहीदित्यादौ "ग्रहोऽलिटि" ( पा० सू० ७।२।३७ ) इत्यनेनेट एव दीर्घविधा-

भैरवी।

स्थास्यतीति तदभावसूचनायेत्यमभिहितम्। तेन 'रामाय' इत्यस्य सिद्धिः। अन्यथाऽप्रत्ययान्ततया समुदायस्य प्रातिपदिकत्वापत्तौ सुब्लुगादिदेशाल्लोपापत्तिरपि वारिता। भाष्ये आश्रीयमाणपदोपादानेन स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता यत्राल्त्वावच्छिन्ना तत्र निषेध इति ध्वनितमित्याशयेनाह—अग्रहीदित्यादाविति। नचैवं सति "क इष्टः" इत्यत्र "वचिस्वपि" इतिसम्प्रसारणम्, तत्र चाक्यार्थः संज्ञीति पक्षे वच्यादीनां यण इक् संप्रसारणमित्र इत्यर्थो भविष्यति। एवञ्च स्थानिबोधकः शब्दो यण् इति, तज्जन्योपस्थितिविषयता यण्त्वावच्छिन्ना न तु अल्त्वावच्छिन्नेति कथमलि विधावित्यस्य तदुदाहरणमिति वाच्यम्; अल्त्वावच्छिन्नेत्यस्याल्पर्याप्तधर्मावच्छिन्नेत्यर्थात्। तथाच यण्शब्दजन्योपस्थितिविषयता यद्रूपावच्छिन्नस्य यण्संज्ञा तद्रूपावच्छिन्नेति यत्वरूपस्तादृशो धर्मः स चाल्पर्याप्त एवेति तदुदाहरणं युक्तमेव। एवमेव प्रत्याहारनिर्देशे सर्वत्र बोध्यम्। "दिव औत्" इत्यादौ चालोऽन्त्यपरिभाषैकवाक्यतयाऽल्पर्याप्ताल्त्वावच्छिन्नैव सेति तत्रापि निषेधस्य प्रवृत्तिः।

यत्तु यन्निमित्तत्वेऽन्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो स्मृयते तस्य निमित्तस्य स्थान्यल्साधारणधर्मत्वे निषेध इत्यर्थं आश्रयणीयस्तथा च सुप्त्वस्य स्यामादौ समुदायेऽपि सत्त्वान्नाल्साधारण्यमिति न तत्र निषेध इति, तन्न, 'तन्वम्ि' इत्यत्रोकारवृत्त्यार्द्धधातुकत्वस्य तत्पादिसमुदायेऽपि सत्त्वेन नाल्साधारण्यमिति तत्यातिदेशेनेट् स्यात्। न च "नपरवि रो" इति करणेन "अचः परस्मिन्" इतिसूत्रेण स्थानिवद्भावेनेट् तत्र भाष्यकृतैव वारित इति वाच्यम्,

भावप्रकाशः।

स्यमस्तु, किमेवमुक्तयेति तत्खण्डनं चायास्यम्, प्राधान्यात्कार्यातिदेश इत्युक्तेः सुदशाङ्गयोः सुलमत्वमित्यनेन विरुद्धत्वाच्च। तदा दीर्घस्यैवातिदेशात्। कार्यशब्देन निमित्तस्यैव ग्रहेष्युक्तरीत्याङ्गत्वस्य दुर्लभत्वाच्चेति दिक्। तदाह—प्रत्ययत्वमिति। परेति शेषः। इदञ्च सुप्त्वादेरप्युपलक्षणम्। न चैवं विनिगमकाभावे वैपरीत्यापत्त्या यत्तुमनुप्रवेश इति वाच्यम्, सुप्त्वास्यादिरन्त्येनेत्यनेन विशिष्टनिष्ठत्वाल्लाभेऽपि प्रत्ययत्वमेकारवृत्तीतिभ्रमनिवृत्तये सादेशे कादेशविसर्गवृत्तिप्रत्ययत्वस्य स्थान्यवृत्तित्वेनानतिप्रसङ्गात् "इदुपधा" इतिसूत्रे मूले वक्ष्यमाणम् 'अग्निः करोति' इति अप्रत्ययस्येत्यस्य प्रत्युदाहरणमयुक्तमिति गूढाशयेन ध्वनयितुं च तथोक्तेः। अत एव ततो वैलक्षण्यसूचकैवोक्तिः "भोमगो" इत्यत्र "इदुपधस्य" इत्यत्र चैतत् प्रपञ्चयिष्यते। प्रत्ययत्वादेरत्र विशिष्टवृत्तित्वं दृष्टान्तेन साधयन् "भोमगो" इत्यत्रत्य मूलग्रन्थासङ्गतिं ध्वनयंश्च सूत्रोपात्तेति विशेषणावश्यकतामाह—अग्रहीदिति। परेनैकारस्याप्रवृत्तिः।

सरला।

तद्वृत्तिधर्मं आर्धधातुकत्वं तन्निमित्तके इडागमे कर्तव्ये स्थानिवत्त्वनिषेधेन वकारे आर्धधातुकत्वस्यातिदेष्टुमशक्यत्वान्न दोषः। नचैवं 'रामाय' इत्यादौ स्थानिभूतो योऽल् एकारः तद्वृत्ति यत् सुप्त्वं तन्निमित्तकत्वेन दीर्घे कर्तव्येऽनल्विधाविति निषेधः स्यादिति वाच्यम्, स्थानिशब्दस्य सम्बन्धिशब्दत्वेनाक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात्। तथा च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये कर्तव्ये न स्थानिवदित्यर्थः पर्यवस्यति। 'ङेयः' इत्यादौ स्थानितावच्छेदकं ङेत्वं तच्च नाल्त्वव्याप्यमिति रामायेत्यादौ न दोषः। एतदेवाभिप्रेत्यानुपदमेव वक्ष्यति ग्रन्थकृत्—'अग्रहीदित्यादावग्रहोऽलिटि" इत्यादिना। तस्य स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वविशेषणदाने तात्पर्यम्। नन्वेवमपि वाक्यसंस्कारपक्षे 'राम ए अत्र' इत्यत्र अल्त्वव्याप्यो धर्मं एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्दीर्घ इति पुनरप्यनल्विधाविति निषेध इति चेत्? न, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके स्था

शब्दरत्नम् ।

नाभाल्त्वेन तस्य स्थानितेति तद्वृत्तीट्त्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम् ।

भैरवी ।

तस्य भाष्यस्यैकदेशयुक्तित्वात् । तस्यैकदेशयुक्तित्वसाधकन्यायन्यासमिति तदुदाहरणप्रदर्शनमेव, तस्योदाहरणस्यासिद्धवत्सूत्रेण सिद्धेः । नच "कृन्मेजन्त"सूत्रभाष्ये 'आधये' 'चिकीर्षवे' इत्यत्रैकारौकारवृत्तिह्रस्वस्याल्पर्याप्ततया निषेधयोग्यताया सत्त्वेन कथमव्ययसंज्ञाप्राप्तिरुक्तेति वाच्यम्, तत्र स्थानिबोधकस्य घिशब्दस्य प्रथमतः समुदायोपस्थापकतया स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता नाल्पर्याप्तधर्मावच्छिन्नेत्यदोषात् । नच तथापि "कुम्भकारेभ्यः" इत्यत्र "बहुवचने झल्येत्" इत्येत्वे कृते स्थानिवद्भावेन कृतमाधित्याव्ययत्वप्राप्तिशङ्का कृता, सा कथं सङ्गच्छताम् ? स्थानिबोधकादत इति शब्दाच्छुद्ध एव प्रथममुपस्थितिसत्त्वादिति वाच्यम् । तत्रापि प्रथमतोऽन्येनोपस्थितिर्न स्वरूपेण, अत्वस्तु समुदायपर्याप्तमिति न निषेधविषयतेत्यदोषात् । इत्थमेवान्यत्रापि बोध्यम् । अस्याङ्कल्पनायां "चिणिष्ट

भावप्रकाशः ।

फलाभावात् "भवत्र"इत्यस्यानुपस्थितेः । अन्यथा सिचो लोपो न स्यात् । एवञ्च इट्दीर्घ इति वाक्यकल्पनेव नैव इति वाक्यकल्पना । स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेवेति न दोष इति भावः । तदा-

सरला ।

निवृत्तेरर्थेन अल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशेऽभावेनादोषात् । नन्वेवं इट्ट्र्याविति सूत्रविरोधः, "क्याच्छन्दसि दीर्घः" इति वार्तिकविरोधः, हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधश्च । तथाहि—प्रतिदीव्नो निष्कौशाम्बिरित्यादौ "गोस्त्रियोः" इति सूत्रे "अचः" इति परिभाषोपस्थित्या अल्त्वव्याप्याल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिणो च आदेशः ह्रस्वः आधववान् कौशाम्बिस्थाकारकस्य प्रकारीभूताल्पकौशाम्बिनिमित्तत्वाद्लुङ्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्त्वनिषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य "क्याच्छन्दसि दीर्घः" इति वार्तिकस्य कीदृशं वा भाविनि प्रकृतस्य चोपयोगाभावादिति चेत् ? नैवम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवत्त्वेत्यर्थेन हल्ङ्यादिलोपे भाव्यडीत्वयोरुद्देश्यतायाः साक्षादवच्छेदकत्वाभावेनादोषात् । अत्र सूत्रे द्वितीयार्थस्वीकारे प्रमाणं तु "भोभगो" सूत्रस्थं भाष्यमेव । तत्र हि "मासि किम् ? 'छन्दःसु' 'पयःसु' । किं पुनः कारणं सुप्यत्वोदाह्रियते न पुनरयं 'वृक्षस्तत्र' 'प्लक्षस्तत्र' इति । अस्त्यत्र विशेषः । विसर्जनीये कृते न भविष्यति । यद्यपि तर्हि विसर्जनीये कृते न भविष्यति छन्दःसु पयःस्विति । स्थानिवद्भावात्प्राप्नोति । ननु चेहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्र प्लक्षस्तत्रेति । अनल्विधौ स्थानिवद्भावो भविष्यति"इत्युक्तम् । द्वितीयार्थास्वीकारे 'छन्दः सु' इत्यादौ यथा यत्वस्थानिकतया पूर्वं विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वप्रवृत्त्यापत्तिस्तथा 'वृक्षस्तत्र' इत्यादावपि विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वापत्तेः सत्त्वेन भाष्योक्तविशेषकथनासङ्गत्यापत्तिः । द्वितीयार्थस्वीकारे तु 'वृक्षस्तत्र' इत्यादौ विसर्गे कृते विसर्गस्य "खरवसानयोः" इति सूत्रविहितस्य रेफत्वावच्छिन्नोद्देश्यताकत्वेनाल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणतया रुत्वस्य तन्निमित्तताके विधौ यत्वे कर्तव्ये 'अनल्विधौ' इत्यस्य प्रवृत्तिः, 'छन्दः सु' इत्यादौ तु "रोः सुपि" इत्यनेन विसर्गस्य विहिततया तस्य च रुत्वावच्छिन्नस्थानिताकत्वेनाल्त्वव्याप्यधर्मावच्छिन्नत्वाभावात् न "अनल्विधौ" इत्यस्य प्रवृत्तिरिति विशेषकथनसङ्गतिः । विस्तरस्तु शब्देन्दुशेखरदीपकेऽस्मद्गुरुकृते द्रष्टव्यः । आदेशिन्यलीति । अत्र आदेशिनि इति विशेषणविभक्तेरभेदार्थो षष्ठ्यर्थो वेति बोध्यम् । तथाच प्रथमपक्षे स्थानिरूपेऽलि, द्वितीये स्थानिघटके तदवयवेऽलि इत्यर्थो लभ्यते । तन्त्रेण निर्देशः । एवञ्चास्माद्भाष्यादप्यर्थद्वयं लभ्यते । प्रत्ययत्वमिति । उपलक्षणमेतत्, सुप्त्वमपि स्थानिवत्त्वेन भवत्येवेति "सुपि च" इति 'रामाय' इत्यत्र दीर्घः सिध्यतीति भावः । सिचोलोपस्य सिद्धिरिति ।

देतत्सकलमभिप्रेत्याह—न तु स्थान्यलाश्रय इति । आश्रयणं चेह यथाकथचिन्न तु प्राधान्येनैवेत्याग्रह. । तेन प्रफल्येत्यत्र वलादिलक्षण इण् [illegible] । तन्निषेधादिति । स्थानिवत्त्वनिषेधादित्यर्थः ॥

अचः ( पा०सू०१।१।५७ ) । अल्विध्यर्थमिति । तेन वव्रश्चेत्यत्र वस्य सम्प्रसारण न । उरदत्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारण-" ( पा० सू० ६।१।३७ ) इति निषेधात् । न चोरदत्वं परनिमित्तं नेति वाच्यम् । अङ्गाक्षिप्ते प्र

---

शब्दरत्नम् ।

यथा कथ चिदिति । व्याख्यानादिति भाव ।

भैरवी ।

ह्रेपोऽनल्माश्रयते इत्यत्राम" इति भाष्यमेव मानम्, "कृन्मेजन्त" सूत्रस्थं भाष्यञ्च साधकमिति दिक् ।

अत्रानल्विधाविन्यत्र प्रसज्यप्रतिषेध एव । न चासमर्थसमासापत्ति, बहुषु स्थलेषु [illegible] स्य दर्शनात् । पर्युदासे हि स्थान्यल्भिन्नाश्रयके विधौ [illegible] इत्यर्थे 'व्यूढोरस्केन' इत्यत्र ण त्वापत्तेर्दुर्वारत्वात् । स्थानिवद्स्य स्थानिस्थान्यवयवान्यतरपरतया स्थानिस्थान्यवयवाश्रितविधिभिन्नविधाविति व्याख्यानेन 'व्यूढोरस्केन' इत्यस्य निर्वाहेऽपि 'बभूविव' इत्यस्या निर्वाह इत्यसमर्थसमासाश्रयणेन प्रसज्यप्रतिषेध एवाश्रित । न चान्यतराल्वृत्तिधर्मस्य वत्वस्याश्रयणादेवमपि बभूविवेत्यस्यासिद्धिरिति वाच्यम्, यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तस्य धर्मस्यान्यतराल्निष्ठस्यातिदेशे कर्तव्ये निषेधस्य प्रवृत्त्यङ्गीकारात् । यदि तु "ह्वेञ्" इत्यादौ ह्कारोच्चारणेन ह्कारोपलक्षिते स्थानित्वस्य बोधनेनाग्रहीदित्यत्रेव सर्वत्र सूत्रोपात्तसमुदाये स्थानित्वमिति हेशब्दनिष्ठं सुप्त्वे प्रत्ययत्वमल्धर्मं इति यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते सोऽत्र स्थान्यल्निष्ठधर्मावच्छिन्ननिमित्तकविधिभिन्नविधौ स्थानिवदित्यर्थं आश्रीयते तदाऽस्तु पर्युदास । एवं सति लाघवमपि भवति । पर्युदासेऽप्यार्थिकनिषेधमादाय निषेधपरत्वेन व्याख्यातृमन्था नेया । पर्युदासपरतया व्याख्यानञ्च "विशिष्ट ह्वेपोऽनल्माश्रयते इत्यत्राम" इति वदता भाष्यकृता ध्वनितम् । तद्ग्राहकवाक्याल्लक्ष्यसाधक वाक्यम् 'इक्‌दीर्घे' इति 'हेमव य" इति रीत्या कल्पनीय स्थानितावच्छेदकशास्त्रोपात्तमेव रूपम् ।

व्याख्यानादिति । अनलिति शब्दसंस्कारार्थं प्रथमोपादेयात्तल्लक्ष्योपपत्त्यर्थञ्च विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूपाशङ्किकाघत्वादित्यर्थ । परममूले-"निषेधा न शक्यो ऽनल्विधाविति तन्निषेधात् " इति ग्रन्थस्य तच्छब्देन निषेधपरामर्शोऽसङ्गतिरत आह मूले—स्थानिवत्त्वेति ॥

( मूले- ) तेन-अल्विध्यर्थमस्य सूत्रस्यारम्भेण । "उरत्" इति सूत्रे अरित्यनेनाल एव स्थानित्वबोधनादिति तात्पर्यम्, "अच परस्मिन्" इति सूत्राप्रवृत्तिदाढ्‌र्यं वारयति—न

भावप्रकाश ।

इ—नाल्त्वेनेति । व्याख्यानादिति । अनलिति स्वतोऽन्या विधिपदाध्याहारेणान्वयायोग्यत्वाद्विधेयत्वाविवक्षया तत्तद्विषयकलक्षणभेदात्तद्विभक्त्यध्याहारेण समासचतुष्टयलाभफलानां सिद्ध्या विधिग्रहण सामर्थ्यादित्यर्थः ।

सरला ।

उपपादितमेतद् 'अनल्विधौ' इत्यस्य द्वितीयार्थनिरूपणावसरे । व्याख्यानादिति । "प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, यां यां विभक्तिमाश्रयितु शक्यते सा सा विभक्तिराश्रयणीया" इत्यादिभाष्यपर्यालोचनया "अनल्" इत्येवसिद्धे विधिशब्दोपादानरूपादधिकयत्नादित्यर्थः ।

त्यये परे तद्विधानात् 'प्रागभ्यासविकारेभ्योऽङ्गाधिकार' इति पक्षं दूषयित्वा 'आसप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात् । किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते, 'नायकः' 'पावकः' इत्यादौ "एचोऽयवायावः" ( पा० सू० ६।१।७८ ) इत्यादीनामप्रवृत्तिप्रसङ्गात् । अनेन तु वार्यते, शब्दाधिकारमाश्रित्य भावाभावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात् । "न पदान्त"

---

शब्दरत्नम् ।

दूषयित्वेति । "अङ्गस्य" (पा०सू० ६।४।१) इति सूत्रे भाष्ये इति शेषः । एतद्दिक्चैव दूषयित्वेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः । अनेन तु वार्यत इति । स्थानिनि सति यद्भवति तदादेशेऽपि भवति, तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थः । अजादेशोऽङ्कार्यं लभते, न लभते चेति वाक्यार्थः । तत्रोपपत्तिमाह—शब्देति ।

भैरवी ।

चोदयमिति । दूषयित्वेति । सामान्यत उपादानेन प्रकृतसूत्र इति भ्रमोऽपि स्यादिति तन्निवारणाय—अङ्गस्येतीति । अत्र दूषणे हेतोरनुक्तेः प्रसिद्धस्य हेतोरनुपलम्भाचाह—एतदिति । 'ववश्च' इत्याद्यसिद्धेरित्यर्थः । यदा '"न सम्प्रसारणे" इति निषेधारम्भाद्न्त्यस्य यणः प्रथमतः सम्प्रसारणं, पूर्वस्य तु तन्निमित्त प्रतिषेध इति स्वीक्रियते, तदा ववश्चेत्याद्यसिद्धिरूपो दोषः । "प्रागभ्यासविकारेभ्योऽङ्गाधिकार" इति पक्षे यदा तु "न सम्प्रसारणे" इति सूत्रस्थसम्प्रसारणशब्दस्य सम्प्रसारणभाविनि लक्षणाऽऽश्रीयते सम्प्रसारणप्रवृत्तिप्राक्काल एव प्रतिषेधो निषेधसामर्थ्याच्च कृते परस्य सम्प्रसारणे पूर्वस्य सम्प्रसारणाप्रवृत्तिरित्याश्रीयते तदा नेदं प्रयोजनमच परस्मिन्निति सूत्रारम्भस्य इत्याशयेनाह—मूले किञ्चेति । न केवलमस्विध्यर्थमिदं सूत्रमित्येव, किन्त्वपरोऽपि विशेष इति भावः । अत एवाह—विस्तरस्त्विति । कैयटादिग्रन्थ इत्यर्थः ।

ननु मूले तु वार्यते इत्येवोक्तं हेतुस्तु नोक्त इति न्यूनतेति तल्लाभायाह—स्थानिनीत्यादि । उक्तार्थस्य वक्ष्यमाणज्ञापकेन लाभे सति यथा लक्ष्यसिद्धिसम्पादकवचननिष्पत्तिस्तथाह—अजादेश इति । प्रयोगीयाच एवादेश इत्यर्थः । न त्वत्रापि सूत्रे पूर्वसूत्रवत्सौत्रस्यान्यादेशाभावस्य ग्रहणं, तेन णिलोपस्यानेन स्थानिवद्भावसिद्धिः । अवधारणफलन्तु मस्तमाचष्टे भारय-

भावप्रकाशः ।

प्रकृतसूत्रारम्भमाह—अङ्गस्येतीति । ननु दोषे हेत्वनुक्तेः, प्रसिद्धहेत्वनुपलम्भाच्च न निराकाङ्क्षत्वमत आह—एतदिति । "सन्वल्लघुनि" इत्यत्रोक्तस्य "अत्रान्यतोऽपि सिद्धम्" इति परिहारस्यासङ्गतिरूपदोष 'एव' व्यावर्त्यः । तस्य तत्रैव दूषितत्वात् । इदमपि यदा निषेधसामर्थ्यादादौ परस्य सम्प्रसारणे पूर्वस्य प्राप्तिः प्रतिषिध्यते तदा, यदा तु सम्प्रसारणभाविनि पूर्वस्य सम्प्रसारण नेत्यर्थः । निषेधसामर्थ्यादकृते तस्मिन्पूर्वस्य सम्प्रसारण नेत्याश्रीयते तदा नेदं फलमस्य । अत एव किञ्चेत्यादिना फलान्तरं वक्ष्यति मूलकृता । स्पष्ट चेद भाष्यकैयटादौ । तत्तु पूर्वमतैकवाक्यतयाऽऽप्यावश्यकम्, तदाह—विस्तरस्त्विति । ननु यथेष्ट वाक्यशेषाध्याहारेण स्थानिसम्बन्धिभावाभावोभयातिदेशाङ्गीकारेऽपि तस्यादेशप्रयुक्तवारणे हेतुत्वासम्भवान्मूलमयुक्तम् । अतः शेषपूरणेन ग्रन्थसङ्गतिमाह—स्थानिनीति । ननूक्तार्थस्य नैराकाङ्क्ष्याद्वाक्यीयत्वेन कल्पासस्कारकत्वाच्छब्दमर्यादया तथाप्रतीत्यभावेनावाच्यत्वाच्च कथं तेन वारण मत आह—अजादेश इति । प्रयोगीयाच एवादेश इत्यर्थः । पूर्वसूत्रवत् सौत्रस्याभ्यादेशभावस्यात्रग्रहणे मानाभावात् । तेन णिलोपादेरनेन स्थानिवत्त्वम् 'अचीकमत' 'धाज्यते' 'धाप्यते' इत्यादौ 'भरुत्वना-

सरला

इत्यर्थादिति । स्यादेतत् । देवयतेः क्विपि 'द्यू' इत्यादौ स्थानिनि वकारे सति अभवदोऽयादे-

यति' इत्यादौ न वृद्धिः । स्थानिनि सत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात् । उक्तञ्च "कार्यमतिदिश्यतां वा सत्त्वासत्त्वापि नेह भारोऽस्ति" इति । स्यादेतत् । पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम् । सन्निहितं चेह त्रयम् स्थानी, आदेशो, निमित्तं च । तत्र न तावत् स्थानी अवधिस्तस्यादेशेनापहारात् । नाप्यादेशनिमित्ते, 'वैयाकरण'इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह–अचः पूर्वत्वेन

शब्दरत्नम् ।

णलोपादिविषये भावातिदेशप्रसक्तिरिति भाव. । न वृद्धिरिति । "अत उपधाया," (पा० सू० ७।२।११६ ) इति वृद्धिर्नेत्यर्थः । "क्विलुगुपधात्व—" ( वा० ) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति भाष्ये स्पष्टम् । आयादेशापत्तेरिति । यणः स्थानिवत्त्वेनाच्त्वादिति भाव· । पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणम् , स्वरे निषे-

भैरवी ।

धायकशास्त्रस्य बलवत्त्वादकारस्य लोप एव भविष्यतीति न वृद्धिरित्यसङ्गतमत आह—अत उपेति ।

ननु तत्र प्रवृत्तिरभावातिदेशेऽपि दुर्वारा, "क्विलुक्" इति वार्तिकेन स्थानिवत्त्वनिषेधादत आह—क्विलुगिति । प्रत्ययेति । यथा 'पारिखीय' इत्यत्र परिखाशब्दाच्चातुरर्थिकेऽणि तदन्तादवृद्धाच्छस्य बाधको "जनपदतदवध्योः" इति वुञ् प्राप्तस्तम्बाधित्वा "वृद्धादकेकान्तखोपधात्" इति छो भवति । एवकारस्य क्विलुगिति वार्तिके चङ्परनिर्ह्रासग्रहणाज्ज्ञापकाल्लब्धस्य व्यावर्त्यमाह—नान्यत्रेति । तेन कथयतीत्यादेः सिद्धिः । ननु 'वैयाकरणः' इत्यत्र निमित्तापेक्षया पूर्वत्वाश्रयणपक्षेऽप्यायादेशापत्तिरुक्ता, सा न सङ्गच्छते, निमित्तादेकारस्याव्यवहितपूर्वत्वाभावादत आह—पूर्वत्वञ्चात्रेति । स्वरे निषेधादिति । तस्य हि 'चिकीर्षक.'

भावप्रकाशः ।

ति" इत्यस्याद्यप्राप्तिः । स्वविधावस्थानिवत्त्वादनन्तरमेपि नेत्यत आह—अत इति । लघूपधवसिद्धिद्वारा लोपहेतुकारस्य तस्या बोध्यम् । नन्वेमपि "क्विलुगुपधात्व" इति निषेधात्तत्वं दुर्लभमेवात आह—क्विलुगिति । "वृद्धादकेकान्तखोपधात्" इत्यस्य 'पारिखीयः' इति लक्ष्ये इत्यर्थः । एवव्यावर्त्यमाह—नान्यत्रेति । उपधासञ्ज्ञायां तद्धेतुककार्यान्तरे चेत्यर्थः । अतएव चङ्परनिर्ह्रासग्रहणं तत्र चरितार्थमिति भावः । नाच्त्वादितिपाठः 'नाच्त्वादिति भावः' इत्यपपाठः । नन्वादेशापेक्षयाऽव्यवहितपूर्वत्वसत्त्वेऽपि न निमित्तापेक्षयाऽतस्तत्कथं तत्पक्षेऽप्येतद्दोषोक्तिरत आह—पूर्वत्वं चेति । अत्र पूर्वविप्रतिषेधः । स्वरे

सरला ।

परेतु आदेशे स्थानिवृत्तिधर्मतत्सम्भावनायां यद् भवति तद् भवति, यत्र भवति तत्र भवतीत्येवार्थः । अत एव "परस्मिन्निति किं युवजानिः" इत्येतत्खण्डनपरं भाष्यं सङ्गच्छते । नच 'दशो गमयति' इत्यादौ लुग्लोपापत्तिरिति वाच्यम्, इष्टत्वात् । अत [illegible] 'पश्य यूनः पश्य' इत्यादौ "न सम्प्रसारणे" इति सूत्रस्य वै "सम्प्रसारणादसम्प्रसारणे" इति कल्पे च न फलभेद इत्याहुः । न वृद्धिरिति । अकारे सति णकाराकारयोरव्यवधानाभावेनाप्रवृत्तस्या वृद्धेरकारलोपेऽपि अभावातिदेशेन "अत उपधाया." इति वृद्धिर्न भवति । एवञ्च 'गणयति' इति फलमभावातिदेशस्य । भावातिदेशफलं तु 'निगाल्यते' इति । तत्र णिचि सति लत्वं भवति तल्लत्वं णिलोपेऽपीति । भाष्ये स्पष्टमिति । "क्वि–लुग्–उपधात्व–चङ्परनिर्ह्रास–कुत्वेषूपसंख्यानम्" इति नपदान्तसूत्रे स्थानिवद्भावनिषेधकं वार्तिकं पठितम् । तत्र उपधात्वपदेन उपधात्वनिमित्तकसर्वकार्याणां ग्रहणे चङ्परे णौ उपधाह्रस्वस्यापि उपधात्वनिमित्तकत्वेन तत्र स्थानिवद्भावस्य तेनैव निषेधसिद्धेश्चङ्परनिर्ह्रासग्रहणस्य वैयर्थ्येन उपधत्वपदेन उपधात्वनिमित्तक प्रत्ययविधेरेव ग्रहणेन वृद्धेः प्रत्ययविधित्वाभावेन न निषेधप्रवृत्तिरिति स्पष्टमित्यर्थः । तदुक्तं भाष्ये–"विशेषण एव तद्वक्तव्य, क्व ? प्रत्ययविधौ । इह मा भूत्—पटयति लघयति" इति ।

दृष्टस्येति । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः । एतेन "अचः पूर्वत्वविज्ञानादैचो सिद्धम्" इति वार्तिकं व्याख्यातम् ॥

'न पदान्त" ( पा० सू० १।१।५८ ) । पदस्य चरमावयव इति । वृक्ष वेदीति वृक्षवीः, वार्तीति वृक्षवा, तमाचष्टे वृक्षव्, विच्। इह "लोपो व्योः—"

शब्दरत्नम् ।

धात् । अतो यन्निमित्ताचारापेक्षयाऽच्येकारस्य पूर्वत्वमस्तीति तत्पक्षे ऽप्ययं दोष इति भावः । आदेशेनापहाराद्वयं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ।

अन्तशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्यासमासेन पदचरमावयवे कर्तव्ये इत्येवं व्याख्याने फलमाह—वृक्षमिति । विजिति । क्विपि वृद् स्यामेरवी ।

इत्याद्युदाहरणम् । तत्र रेफवकाराभ्यां व्यवधानेन स्थानिवद्भावाप्राप्ते न निषेधोऽव्यवहितपूर्वस्याश्रयणे व्यर्थः स्यात् । अत —व्यवहितस्यापि पूर्वशब्देन ग्रहणात् । अपिशब्दात् स्थान्यादेशापेक्षया पूर्वत्वस्य ग्रहणपक्षे दोषः सूचितः । अचान्तरङ्गपरिभाषया षगागमस्यासिद्धत्वाद्भोभयपक्षे 'वैयाकरण' इत्यत्रायादेशापत्ति, "किरतौ लवने" इति ज्ञापकादतिदेशविषयेऽपि तस्याः प्रवृत्तिस्वीकारादिति वाच्यम्, ज्ञापकमूलकवचनकल्पनापेक्षया स्थान्यपेक्षया पूर्वत्वाश्रयणे लाघवात् ॥

मूले—'ऐचोः सिद्धम्" इत्यत्रैचो इत्यस्य श्रवणमिति शेषः । परममूले-"न पदान्त" इति सूत्रस्थविधिशब्दस्य भावसाधनत्वाभिप्रायेण व्याख्यानं कृतं, न तु तस्य कर्मसाधनत्वम् । तस्य फलं मूले आह—वृक्ष वेदीत्यादिना । एतदेवोपपादयति—अन्तशब्दस्येति । यत्तु

भावप्रकाशः ।

इति । अन्यथा तत्र रेफवकाराभ्यां व्यवायेन तदप्राप्त्या तद्वृद्धिनिषेधे व्यर्थः स्यादिति भावः । अत, शाद्ग्रपूर्वत्वग्रहणात् । अपिश्थान्यादेशान्यतरयोः समुच्चयः । यत्तु अन्तरङ्गपरिभाषया ऐचोरसिद्धत्वान्मूलटीके चिन्त्ये 'नागानन्तर्ये" इति त्वनित्या नास्त्येव वा । एवं च त्रयाणामपि पक्षाणामदुष्टत्वम्, निमित्तापेक्षया पूर्वत्वपक्षे लवनमित्यादाववायभावापत्तिस्तु "किरतौ लवने" इत्यादिज्ञापकात्रेति न्यासकृदनुयायिमन्द, तन्न, आतिदेशिके कार्येऽन्तरङ्गत्वस्य दुरुपपादत्वात् तदैयर्थ्यापत्तेश्च, ज्ञापकाश्रयणे गौरवाच्च, प्रकृतसूत्रभाष्यवार्तिकविरोधाच्च । अत एव तथा भाष्यकारोक्तिखण्डनपरकौस्तुभसंगतिरिति दिक् । एवञ्च सूत्रे श्रुतत्वात्तस्यैवावधित्वमित्याह—स्थानिन इति ।

प्रतीकं धृत्वा यथोक्तौ सङ्गतिमाह—अन्तेति । यत्तु विधिशब्दः कर्मसाधनः, पूर्वेण शेषषष्ठ्या समासे द्विर्वचनाद्यसङ्ग्रहेऽपि कर्मधारये न दोष इति रत्नाकरः । तन्न, तस्य पूर्वनिपातप्रसक्तेः । कर्मसाधनस्य बहिरङ्गत्वाच्च । एतेन विधिशब्द कर्मसाधनः स्थानषष्ठ्या च समास इत्यपास्तम्, द्विवचनादिषु विधिशब्दान्वयापत्तेश्च,तत्र कर्मधारये वैरूप्यापत्तेश्च, एकेन विधिशब्देन युगपत्समासद्वयानुपपत्तेश्च, एषो यन्(?)हृति' इत्याद्यसिद्ध्यापत्तेश्च । इयमेवारुचिर्मूले तुनेतद्व्याख्याने बोधिता । एतेन तथा व्याख्यानं स्वीकुर्वन् मन्द "अधरस्यैवाधरस्य" इति न्यायेन प्रत्युक्तः । तदाह—विधीति । इत्येवमिति । इत्येवं फलि

सरला ।

तत्पक्षेऽपीति । निमित्तग्रहणपक्षेऽपीत्यर्थः । उपलक्षणमितीति । अविद्यमानं सद् व्यावर्तकमुपलक्षणम् । यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र देवदत्तगृहे सर्वदा काकस्यासत्त्वेऽपि कदाचित्काकस्य सत्त्वादर्शनेन काक उपलक्षणम् । विशेषणं तु विद्यमानं सद् व्यावर्तकम् । यथा 'रूपवान् घटः' इत्यत्र रूपम् । मूले व्याख्यातमिति । पूर्वत्वस्योपलक्षणतया स्थानिभूतान्निरूपितस्यैव पूर्वत्वस्य ग्रहणेन 'वैयाकरण' 'सौवश्वि'इत्यत्र स्थानिभूतान्निरूपितपूर्वत्वाभावेन ऐकारौकारयोः श्रवणं सिद्धमित्यर्थकं वार्तिकं सङ्गतमित्यर्थः ।

भावसाधन इति । विपूर्वक 'धा' धातो 'उपसर्गे घो कि.' इति सूत्रेण कि प्रत्ययः । स च भावे

( पा० सू० ६।१।६६ ) इति वलोपो न, स्थानिवत्त्वात् । न च "न पदान्त-" ( पा० सू० १।१।५८ ) इति निषेध, इह विधेयस्य लोपस्य पदान्तावयवत्वात् । पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेद सिध्येत् । "सुबन्ताण्णिच्" इति हरदत्तादिमतेऽन्तर्वर्तिसुपा पदत्वात् । न च "इष्ठवत्" इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाध ,

शब्दरत्नम् ।

दिति भाव । स्थानिवत्त्वादिति णिलोपस्य टिलोपस्य वा स्थानिवत्त्वादित्यर्थ नन्व स्य पदत्वाभावात्कुतोऽसिद्धिरत आह—सुबन्त दिति। अन्तर्वर्तिसुब्निमित्तकपदत्वस्यैकद

भैरवी ।

कैयटेन "वृक्ष वृश्चति" इति क्विपि तत भाष्याने णिचि विशुक्तस्तथाव्याख्यानफलनिरूप णावसरे, स तु प्रकारो न युक्त, उपधावृद्धेर्दुर्वारत्वात् । अतोऽयमेव साधनप्रकार आदृत । कठ् स्यादिति । तस्य वलोपापवादत्वादिति भाव । अस्य—वृक्षव्शब्दस्य । पदत्वाभावादिति । प्रातिपदिकाण्णिज्युत्पत्त स्वीकारादिति भाव । मूले—हरदत्तादिमत इति । "तत्करोति तदा-चष्टे" इति वचनस्य 'द्वितीयान्तात्' इति तेन व्याख्यातत्वादिति भाव । अथ "प्रातिप-दिकाद्धात्वर्थे" इत्यत्र प्रातिपदिकादित्यस्य दर्शनेन सुबन्तादित्यसङ्गतमिति वाच्यम्, "तेनातिक्रामति" इत्यत्र तेनेत्यस्य तृतीयान्तादिति व्याख्यानदर्शनेन तत्साहचर्यात्प्राति पदिकादित्यस्य प्रातिपदिकप्रकृतिकात् सुबन्तादित्यर्थ इति सद्भावात् । अन्तर्वर्तिसुपा पद त्वमाकाराद्यन्ते न तु वान्त इत्याशङ्कायामाह—अन्तर्वर्तीति । एकदेशेति । तस्य न्यायस्य लौकिकत्वादिति भाव । मूले—न चेडवदिति । इदमपि परत्वात्सुतिङन्तमित्यस्य

भावप्रकाश ।

तव्याख्यान इत्यर्थ । शब्द तु पदचरमावयवकमकविधाविति भाष्यम् । यत्र कैयटेन 'वृक्षवन्तमाचष्टे' इति णिचि टिलोपे विचि रूपमिति मते मतुब्लुक्टिलोपापवादत्वात्न दूष्य 'वृक्ष वृश्चति' इति क्विपि तमाचष्ट इति णिचि टिलोपे विजि युक्तम् । प्रकारोऽप्येवम् । तत्र, 'अत उपधाया' इति वृद्धेर्दुर्वारत्वात् । अतो मूले वेडीत्यादि । तूठिति । वलोपापवादत्वादिति भाव । देवो साकाङ्क्षत्वादाह—णिलोपस्येति । तथाच वलस्थानाभाव इति भाव । वृद्धिवारणायाह—णिलोपस्येवेति । अस्य—वृक्षव्शब्दस्य । पद त्वाभावादिति । प्रातिपदिकात् णिज्युत्पत्ते । नचैव मूलेऽपदत्वादित्येव सिद्धत्वयबोक्तिव्यर्थेति वाच्यम्, अन्तशब्दस्य समीपवाचकत्वमिति सुबन्ताण्णिजिति मतेऽपि सिद्धिरिति च ध्वनयितु तथोक्ते । एतेन णिचि वचमाणत्वापदत्वस्यैवाभावेन तदनवयवत्वादिति मूलं चिन्त्यमेवेति रत्नाकरोक्तमपास्तम्, तदीते खण्डयिष्यमाणत्वाच्चेति भाव । कुतोऽसिद्धिरिति । तथाच वृक्षव्शब्दस्य 'वृक्षव् करोति' इत्यादिमि कमाख्यविरोध इति भाव । निमित्तीभूतसुबन्तहेतुकपदसज्ञाहेतुकनिषेधेन ऊठुत्पत्त्य वलादिवेलायां वलोप प्रविद पक्षाभावादिदेशबाधो वक्तुमशक्य इति ध्वनयन्नाह—अन्तर्वर्तीति । एकदेशेति । तथाच लौकि कन्यायविषयोऽय नतु शास्त्रीयस्थानिवद्भावादे । पदान्तवर्तिसुब्निमित्तपदसज्ञाया बाधणिच्हेतुकादि

सरला ।

कर्मणि च तेन विधानाद् द्वयोरप्यर्थयो सम्भवति । तथा च भावे यदा स विधीयते तदा कर्मणोऽनुक्ततया पदान्तस्येति कर्मणि षष्ठ्या विधिशब्देन समास, ततश्च पदचरमावयवकर्मके विधाने इत्यर्थे यस्य विधान तस्य तत्र पदचरमावयवत्वमावश्यकमिति लोपस्याभावरूपतया तस्यावयवत्वासम्भवेन लोपविधाने नास्य प्रवृत्ति । कर्मणि यदा कि प्रत्ययस्तदा कर्मण उक्ततया सम्बन्धमात्रे शेषषष्ठ्या पदान्तशब्दस्य विधिश-ब्देन समास इति पदचरमावयवसम्बन्धिविधाने इत्यर्थे षष्ठ्या अनिर्धारितसम्बन्धविशेषतया "षष्ठी स्थाने योगा" इत्यस्य प्रवृत्तौ पदचरमावयवस्थानिके विधाने इत्यर्थे यस्य विधान तस्य तत्र पदचरमावयवस्था-निकत्वमात्रस्यापेक्षितत्वेन पदचरमावयवत्वस्य तदनवयवत्वस्य वा सत्त्वेऽपि तत्प्रवृत्त्या लोपेऽपि कर्तव्ये 'पदान्तविधौ' इत्यस्य निषेधस्य प्रवृत्तिरिति 'वृक्षव्' इत्यत्र दोषापत्तेरत्र सूत्रे भाष्यसाधन एव एष्टव्य इति

गोर्लुप्तत्वात्, न च प्रत्ययलक्षणम्, वर्णाश्रयत्वादिति भाव । द्विर्वचनादौ चेति । यलोपादय आदिशब्दग्राह्या । 'वरे' इति तु वरे योऽजादेश स न स्थानिवदिति व्याख्येयम् । सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्व सप्तम्यलुक् च ।

---

शब्दरत्नम् ।

दाविकृतन्यायेन वान्तेऽपि सत्त्वमिति भाव । प्रत्ययलक्षणमिति । स्थानिव त्त्वेन प्रत्ययनिमित्त कार्यमित्यर्थ । वर्णाश्रयत्वादिति । "णाविष्ठवद्–" इत्यनेन "यचि भम्" इति शास्त्रस्यैवातिदेशस्तच्च वर्णाश्रयम्, एवञ्च स्थानिवत्त्वस्याप्रसक्ति । कार्यातिदेशेऽपि यन्निमित्तत्वेनस्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तसत्त्वमति-

भैरवी ।

धारकमिति भाव । ननु प्रत्ययलक्षणमित्या शङ्का कृता सा न सङ्गच्छते, तस्य सूत्रस्य नियमार्थत्वसिद्धान्तादत आह—स्थानिवत्त्वेनेति । एवञ्च स्थानिवत्सूत्रस्यैव प्रसक्तिरिहोर्ध्वमिति भाव ।

अल्विधित्वात्तस्याप्राप्तिमुपपादयति—णाविष्ठदित्यादिना । वर्णाश्रयमिति । यचादीत्यस्य स्वादीत्येतद्विशेषणत्वेऽपि प्रपञ्चेऽस्यनेनाप्राधान्येनाल्लाश्रयणेऽपि निषेधस्य प्रवृत्ते स्वीकारादिति भाव । ननु स्थानिवत्सूत्रेण प्राधान्यात्कार्यातिदेश एव क्रियते इति कथमतिदेशाप्रवृत्तिरत आह—कार्यातिदेशेऽपीति । अखीकारादिति । अत एव 'सर्वस्मिन्' इत्यत्र दीर्घो न अतिदिष्टकार्यस्यापि यजादिन्वनिमित्तकत्वात् । ननु वर्णाश्रयेऽपि प्रत्ययनिमित्तकार्यार्थंम्प्र

भावप्रकाश ।

लोपस्यासिद्धत्वात् 'अच पर'' इति स्थानिवद्भावादरदत्तमताङ्गीकारेऽपि प्राचोक्तव्याख्याने न दोष इति मन्दोक्तमपास्तम्, असिद्धमिति यत्र प्रयासस्याऽन्तरङ्गादिपरेन शास्त्रस्यैव ग्रहणेनात्राप्राप्ते । त न्यायस्य लौकिकत्वात् । अतएव तद्धम्यपदत्वस्याशास्त्रीयत्वेनान्त्यपक्षोऽप्ययुक्त । वक्ष्यमाणरीत्या 'न पदान्त' इति निषेधाच्च । तदाह—वान्तेपीति । अपिना ईकारान्तादिसमुच्चय । यत्तु पदान्तस्य स्थाने इत्यादि वर्णाश्रयत्वादित्य तमनूद्य 'अतृणेट्' इत्यादिसिद्धये निषेधस्य वर्णप्राधान्ये एव प्रवृत्त्यङ्गीकारात् कौस्तुभे "अच पर" इति सूत्रे 'पटयति' इत्यत्र तत्त्ववारणाय तादृशभावेन पदत्वबाधस्याभ्युपगमाच्चेति दूषितवान् रत्नाकरस्तदसदिति ध्वनयितुमाह—स्थानीति । शेषपूरणमेतत् । उपस्थितत्वात् प्रत्ययेत्यापत्त्यर्थ । उभयत्र बहुव्रीहिरिति भाव । नन्वेवं व्याख्याने उत्तरासङ्गात "अन्त्यप्रत्ययग्रहणात् तल्लक्षण यथा स्यात् वर्णलक्षण माभूत्—'गोहितम्' इत्यादिभाष्येण वर्णाश्रये तत्त्वाभावोक्तेर्न स्थानिवत्त्वमित्यत आह—णाविति । अयञ्च टेरित्यत्रोक्त "णाविष्ठवत्प्रातिपदिकस्य" इति वार्तिकैकदेशानुवाद । एतेन "प्रातिपदिकात्" इत्यादिगणसूत्राणामप्रामाण्यम्, "हेतुमति च" इत्यत्र 'तत्करोति' इति वार्तिकोक्ते, एवञ्च प्रातिपदिकादेव णिजुत्पत्तिलाभ इति सिद्धान्तो ध्वनित । यद्यपि गणसूत्रा भाष्ये न दृश्यते तथापि "उदाहरणमेतन्न परिगणनम्" इति भाष्यात्तस्या अपि ग्रहणम्, तेन 'स्रवयति' इत्यादौ वुत्वाभाव 'स्रक्' इत्यादौ तत्त्व च सिध्यति, तदाह—यचि भमिति । वर्णाश्रयमिति । वर्णं अल् आश्रयो हेतुयत्र तदित्यर्थं । वर्णाश्रयत्वादिति मूलस्याप्ययमेवार्थ । एवञ्चाल्विधित्वादिति फलितम्, तदाह—एवञ्चेति । अल्विधित्वे चेत्यर्थ । एवञ्च नेदं तद्विशेषपरम्, किं तु स्थानिवत्सूत्राप्रवृत्तिबोधकं 'दुध्युपास्य' इत्यत्रानेनेत्यादि कौमुदीग्रन्थवदिति । प्रागुक्तरत्नाकरोक्तियुक्त्या 'पटयति' इत्यत्र णिच्सत्त्वेन प्रत्ययलक्षणप्राप्त्या द्वितीयहेतोरसम्बद्धत्वाच्चेति भाव । नन्वेवमपि प्राधान्यात्कार्यातिदेशपक्षेऽतिदेशसूत्रस्यातत्त्वेनेद दुर्वचमत आह—कार्यातिदेशेऽपीति । भवरूपस्य तन्निमित्तरूपस्य वा कार्यस्यातिदेशेऽपीत्यर्थं । अनि

सरला ।

तदाशय. । यन्निमित्तेति । यस्य निमित्तस्याभावप्रयोज्या उपदेशस्य प्रधानशास्त्रस्याप्रवृत्तिस्तन्निमि-

शब्दरत्नम् ।

देशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः । प्रत्ययलक्षणसूत्रं तु भाष्यकृता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं न त्वप्राधान्येना-

भैरवी ।

त्ययलक्षणसूत्रमस्त्वित्यत आह—प्रत्ययेति । स्थापितमिति । नच 'अतृणेट्' इत्यत्र कथमिमागमस्तस्य हलादौ पिति सार्वधातुके प्रवृत्तिस्वीकारादिति वाच्यम्, हलीत्यस्य तत्र

भावप्रकाशः ।

देशस्यापीत्यपिरुपदेशसमुच्चायकः । यथाश्रुतमूलस्य भङ्क्त्वा व्याख्याने बीजमाह—प्रत्ययेति । प्रत्ययहेतुकार्यबोधकसूत्रमित्यर्थः । साधारणमिति । अन्यासाधारणमित्यर्थः । एवञ्च 'सुदृषत्प्रासादः' इत्यादौ दीर्घत्वमिदाद् भत्वमतिदेष्टुमशक्यम्, "दृषण्वत्ययोः" इत्यनेनान्यत्रापि विधानात् । एतेन वार्त्तिकमते यथाश्रुतविषयतया तत्रातिदेशः, तथापि भाष्याभिप्रायेणेत्ययुक्तमिति भाष्योक्तिः प्राबल्यानुरोधेनेति ध्वनितम् । नियमशास्त्राणां विधिमुखेनैव प्रवृत्त्या यथा श्रुतमूलस्योक्तिर्भङ्क्त्वा व्याख्यानमयुक्तमित्यपास्तं च, तस्येव चकारोऽयं तदप्राप्त्या वर्णाश्रयत्वादिरुक्तत्वात्प्रमाणतेः । अत एव शास्त्राणामपि नियमार्थत्वादिसूत्रारीत्यापाच, यथाश्रुतमूलासङ्गत्यव्याख्यानेति दिक् । लक्षणमिति नियमेति । एतेन नियमशास्त्राणां विधिरूपेणैव प्रवृत्तिः सूचिता । अन्यथा यत्र तदभावस्तत्रान्यदभाव इति नियमेनैव सूयात् । नत्विति । सुदृषदित्यादौ दीर्घापत्तेः । तथाच वार्त्तिकमतमेवायुक्तम् । अतृणेट् इत्यादिसिद्धिस्तु "नाभ्यस्तस्य" इत्यतोऽपि नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानेनेति स्पष्टं भाष्यादौ । तथाच मूलकृतोऽपि स्थानिवत्सूत्र-

सरला ।

यानिकानि यानि यानि तत्र निमित्तानि तन्निमित्तं धर्मातिदेशशास्त्रस्यापीत्यर्थः । वर्णाश्रयत्वाक्षतिरिति । ननु 'द्यभन्' इत्यत्र णित्वेऽपि स्वादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" इति शास्त्रस्याप्रवृत्तिरिति तदतिरिक्तनिमित्तकत्वेनाजादित्वनिमित्तकत्वाभावेन कथं वर्णाश्रयत्वमतिदेशस्येति चेत्? न, यन्निमित्तकैकल्यत्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् ।

तथाहि, णिः इष्ठवद्भवति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः स्वादित्वरूपः न त्वजादित्वरूपो 'भूयिष्ठः' इत्यादौ व्यभिचारादिति यन्निमित्तपदेन स्वादित्वस्यैव ग्रहणेनाजादित्वस्य तदतिरिक्तत्वात्तदतिदेशस्य तदपेक्षणेन वर्णाश्रयत्वभञ्जनमिति न दोषः । न चैवमपि "यचि भम्" इत्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वान्यतरत्वेन निमित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकेष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्यमेवेति वाच्यम्, यचीत्यत्र 'य्' इति लुप्तसप्तम्यन्तं पृथक् पदमिति स्वीकारेणादोषात् ।

अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच् समासान्तो न प्रसज्यते । अथवा यन्निमित्तकैकल्येत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकधर्मव्यापकीभूताभावप्रतियोगिधर्मस्यैव ग्रहणमिति न कोऽपि दोषः । णिः इष्ठवद्भवतीत्यत्र सादृश्यानुयोगितावच्छेदकं णित्वं तद्व्यापकीभूताभावप्रतियोगि स्वादित्वमेव न त्वजादित्वयादित्वैतदन्यतरद्, णौ अजादित्वस्य सत्त्वादिति दिक् । स्थापितमिति । स्थानिवत्सूत्रेणैव सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रं नियमार्थमिति भाष्यकृतः । तथाच प्रत्ययलोपे प्रत्ययलक्षणमेव न तु स्थानिवद्भावः । तेन स्थानिवत्सूत्रस्थादेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन संकोच इति 'सुदृषत् प्रासादः' इत्यादौ स्थानिवद्भावेनासन्तत्वमादाय न "अत्वसन्तस्य" इति दीर्घः । नच 'भिनत्ति' 'अतृणेट्' इत्यादौ "शास इदङ्हलोः" "तृणह इम्" इत्यादि न स्यात् । प्रत्ययलोपसूत्रस्य स्थानिवत्त्वनियामकत्वसिद्ध्यर्थं नियम्यस्थानिवत्सूत्रमात्रविषयकत्वाभ्युपगमात्तत्र सूत्रे अनल्विधौ इत्यस्यानुवृत्तेः सत्त्वेन हलादित्वस्य अल्व्याप्यधर्मघटितत्वात्प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम्, "शास इदङ्हलोः" इति सूत्रे हलिति न क्रियते, "शास इत्" "अङि" इति च योगो विभज्यते अजादौ चेदङ्येवेति नियमेन, "तृणह इम्" इत्यत्र हलीतिपदमननुवर्त्य "नाभ्यस्तस्य" इति सूत्रात् 'न' इति 'अचि' इति चानुवर्त्य

उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभेऽस्माभिः। नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेत्? न, कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन

---

शब्दरत्नम्।

गादिलोपलक्षणत्वातिरिक्तविषयं, तेन तत्र स्थानिवत्त्वं भवत्येवेति "तस्य दोष-" इत्याद्यपि न वाचनिकमिति भावः। मातुः कार्यमिति। सिद्धान्तव्याख्यानेऽप्यत्र दोषः। तथा हि, सकारसन्निधावकारो नैव प्रत्ययः समुदायनिवेशितत्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य तत्सम्बन्धित्वाभावात्। यस्तूत्वे कृतेऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः, स लुप्त एव। न च "अन्तादिवच्च" (पा० सू० ६।१।८५) इत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थात्तुरुसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनोभयत्वी।

अयञ्च प्रपञ्चितपदानुवादः। वस्तुतो "न पदान्त" सूत्रे द्विर्वचनादिग्रहणेन यनिघटिताभ्योतिदेशामान्त्रिपाद्यामप्रवृत्तिर्भवत्येव। अत एव 'अमो र्षारेपण' इत्यादिसिद्धिरिति स्फुटीभविष्यति। द्विर्वचनादिग्रहणन्तु न्यायसिद्धानुवादः। "तस्य दोषः" इति तु वाचनिकमिति बोध्यम्।

मूले—नन्वेवमिति। एवम्-प्रत्ययभिन्नस्येति रीत्या सामानाधिकरण्येन व्याख्याने। षत्वं स्यादिति। विसर्गस्य प्रत्ययभिन्नत्वादिति भाव। अत्रैवमित्युपादानेन प्रत्ययपदस्य प्रत्ययसम्बन्धिनि लक्षणापक्षे नायन्दोष इति भ्रान्तिः स्यात्तन्निवारणायाह—सिद्धान्तेति। अकारः—असोऽवयवाकार। समुदायनिवेशितत्वात्—अक्षिति समुदायपर्याप्तत्वात्। तदादेशस्य—अकारादेशस्य। अस्याकारादेशत्वेऽपि "द्वयोः षष्ठीनिर्दिष्टयोः" इति न्यायेन ऋवर्णादेशत्वमपीति रपरत्वस्य सिद्धिः।

"सर्वे सर्वपदादेशाः" इति न्यायानुसारिणमाशङ्कामिराचष्टे—नचान्तादीति। प्रत्ययत्वेति।

भावप्रकाशः।

न्यायसिद्धानुवादोऽयमिदं शास्त्रान्तराणां वक्ष्यमाणानां त्रिपाद्यां प्रवृत्तिबोधनाय नपदान्तेत्यत्र द्विर्वचनादिग्रहणवत्। तत्फलं स्वभी ष्टीःपेत्यादिनानुपदमेव स्फुटीभविष्यति। इदं [illegible] वाचनिकमेव। योगविभागस्तु भाष्ये न दृश्यते। अत एव सिद्धकाण्ड वार्तिककृताप्य "नलोप" इति सूत्रं च सूत्रकृता। भाष्योक्तिस्तु कौस्तुभानुसारिणी। स तु चिन्त्य एवेति बोध्यम्। तद्ध्वनयन्नाह—इतिभाव इति। अन्यथेति बोध्यमित्युचितमिति दिक्।

यत्तु कस्कादिषु भ्रातुष्पुत्रशब्दग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्येति भाष्योक्तं ज्ञापकं मूलोक्तपक्षसाधकम्। अन्यथा एकादेशस्य परादिवत्त्वेन ग्रहणात्प्रत्ययसम्बन्धतया तत्सम्बन्धित्वेन विसर्गस्य षत्वाप्राप्त्या तदसंगतिः स्पष्टैव। लुप्यतेऽत्र प्रत्यय इति भाष्यमुपादाय सन्निधावनेन प्रत्ययत्वं [illegible] लब्धं समुदायनिष्ठत्वात्तस्येति कुतस्तदादेशे तत् उत्वे कृतेऽवशिष्टस्सस्तु प्रत्ययसञ्ज्ञोऽपि लुप्त इति भाव इति कैयटोक्तं [illegible] चिन्त्यम्। तत्सन्निधौ तथात्वेऽपि तस्मिन् लुप्तेऽवशिष्टस्य सम्भावनया प्रत्ययत्वानपायात्। अन्यथा यातिरित्यपि न स्यात्, वरेग्रहणं चानर्थकमापद्येत। तस्मादेकादेशस्य परादिवत्त्वेन ग्रहणादुरः इत्यस्य प्रत्ययत्वं दुर्वारमिति रत्नाकरः। यद्यपि मूलोक्तपक्ष एवोक्तभाष्यसम्मतस्तथापि प्रत्येकं संयोगसञ्ज्ञेति दृष्टवदफलः। वैयधिकरण्यपक्षस्तूक्तरीत्या आवश्यक एवेति दण्डी च। तदुभयमप्ययुक्तं, फलसत्त्वे सम्भावनया तदाश्रयणेऽप्यत्र षत्वे तदभावात्, एवमप्यन्वयत्वस्य त्रिपाद्यामप्रवृत्तेश्च, वक्ष्यमाणरीत्याऽस्य सफलत्वाच्च, तथा वैयधिकरण्यानाश्रयणाच्च। तदेतद्ध्वनयन्नाह—सिद्धान्तेति। लक्षणया सामानाधिकरण्येपीत्यर्थः। दोषः। षत्वापत्तिः। यस्तूत्वे इति। उत्वस्त्यर्थः। यदागमा इति न्यायेनेति भावः। कैयटोपरि नारायणरत्नाकरोक्तं दोषमुद्धरति—नचान्तेति। मुख्यमतेति। रात्सस्येति रत्वस्यासिद्धत्वात्

डसिङसोरत उकारात्परस्य षत्वं नेति ज्ञापनात् । एवं च 'अप्रत्ययस्य' इत्येतदपि

शब्दरत्नम् ।

रित्यस्य प्रत्ययतया न दोष इति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्रान्तरङ्गस्याप्रवृत्तेः । स्थानिवत्त्वेन तु न निर्वाहः । उपात्तस्य स्थानिनो ऽकारस्य प्रत्ययत्वाभावात् । प्रत्ययसम्बन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् । "सर्वे सर्वपदादेशा" इति न्यायेन मातृ असित्यस्य स्थानित्वेऽप्यसित्यस्य स्थानित्वालाभेनोसित्यस्य प्रत्ययत्वमलभ्यमिति । एतदेवाभिप्रेत्य प्रकृतसूत्रे "उरण् रपरः" ( पा० सू० १।१।५१ ) इति सूत्रे च भाष्ये उक्तम् "इह कस्मान्न भवति पितुः करोति, "अप्रत्ययस्य" इति षत्वं प्राप्नोति, अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चायं, लुप्यतेऽत्र प्रत्ययविसर्जनीयो "रात्सस्य" ( पा० सू० ८।२।२४ ) इति" । लुप्यतेऽत्रेत्यादेरयमर्थः—प्रत्ययविसर्जनीयत्वेन यस्तत्राभिमतः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति योजयम् । ज्ञापनादिति । त्रिपाद्यामप्यन्तरङ्गप्रवृत्तिज्ञापनद्वारेति भावः । अत एव 'अमी,

भैरवी ।

प्रत्ययावयवस्य प्रत्ययावयवतया तदादेशस्य विसर्गस्य तत्त्वसत्त्वेनेति शेषः । ननु स्थानिवत्सूत्रस्य प्रवृत्तिरुपपादितेति तेनोसित्यस्य प्रत्ययत्वम्भविष्यतीत्यत आह-स्थानिवत्त्वेनेति । अनुपात्तस्य स्थानिनो ऽकारस्याप्रत्ययस्येऽपि सकारनिष्ठप्रत्ययसम्बन्धित्वमतिदेशेन विसर्गेऽस्त्वित्यत आह-प्रत्ययसम्बन्धित्वमिति । मातृ असित्यस्येति । अस्मिन्पक्षे नत्वसिति समुदायो नार्थबोधक इति स परित्यक्तः । एतदेव—उपपादितपदार्थसत्त्वमेव । अत्रैवकारेण कैयटेन "लुप्यते ऽत्र प्रत्ययः" इति प्रतीकमुपादाय ससन्निधावकारेण प्रत्ययत्वं न लब्धं समुदायनिष्ठत्वात्तस्येति कुतस्तदादेशे तत्, तस्मै कृते ऽवशिष्टस्सस्तु प्रत्ययसंज्ञोऽपि लुप्त इति भाव' इति यदुक्तन्तन्न युक्तमिति ध्वनितम् । सकारसन्निधावकारे यद्यपि न प्रत्ययत्वं तथापि तस्मिन् लुप्तेऽवशिष्टेऽकारे प्रत्ययत्वस्यानपायात् ।

ननु "रात्सस्य" इत्यनेन सकारस्य लोपो विधीयते, न तु विसर्जनीयस्येति "लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्य" इति भाष्यस्य कथं योजनेत्यत आह—लुप्यतेऽत्रेत्यादेरिति । यः-विसर्जनीयः । प्रत्ययस्यैव-सस्यैव । ज्ञापनद्वारेति । एवञ्च मुख्यं ज्ञाप्यमिदमेव, षत्वञ्चेति तु फलितार्थकथनमिति ध्वनितम् । अत एव-त्रिपाद्यामन्तादिवद्भावस्य प्रवृत्तिस्वीकारादेव ।

भावप्रकाशः ।

अलोपे सतीति शेषः । न दोष इति । विसर्गस्य प्रत्ययावयवत्वात्न षत्वप्राप्तिरित्यर्थः । तत्रान्तेति । कर्त्तव्ये इति शेषः । तत्राप्रवृत्तेरित्यर्थः । अन्तादिवत्त्वाप्रवृत्तेरिति पाठस्तु सुगम एव । तदुक्तमेव खण्डयति—स्थानीति । अस्य तत्रापि प्रवृत्तेरिति भावः । उपात्तस्येत्युक्तिफलमाह—सर्वे सर्वेति । इत्यस्यैकवचनेन समुदायस्य स्थानिना सूचिता । तदाह—असित्यस्येति । इति दोषप्रतिपादकग्रन्थसमाप्तौ । एतदेवेति । अन्ययोक्तरीत्या तदसङ्गतिः स्पष्टैव । स्यतीति । अर्थे तात्पर्यं न त्वानुपूर्व्यामिति भावः । नन्वेतद्भाष्यस्योक्ततात्पर्यं कुत्रेति 'प्रत्ययविसर्जनीयो रात्सस्येति' इत्यत्र तदवयवस्तद्रूपो वेत्यर्थद्वयस्य सम्भवेपि श्रूयमाणविसर्जनीयस्योक्तरीत्या तदनवयवत्वाल्लोपाप्रसक्तेश्च लुप्तस्य विसर्जनीयत्वाच्च भाष्यमसङ्गतमेवात आह—लुप्यते इति । प्रत्ययविसर्जनीयत्वेनेति । तत्स्थानिकविसर्जनीयत्वेनेत्यर्थः । तत्स्थानिकत्वेनेति यावत् । यः—विसर्जनीयः । प्रत्ययस्यैव—सस्यैव । अत एव लुप्यतेऽत्र प्रत्ययो रात्सस्येतीति पाठैकवाक्यता भवतीति भावः । ज्ञापनेति बोध्यमिति पाठः । ज्ञापनेति । एतेन मुख्यं ज्ञाप्यमिदमेव, षत्वाभावस्त्वार्थिक इति मूलोक्तज्ञापनादित्यस्यार्थिकबोधनादित्यर्थः सूचितः । एव चोसित्यस्य प्रत्ययतया तत्सम्बन्धित्वसत्त्वेन तद्भेदाभावे ऽन्यत्र षत्वाभावः स्वस्मिन् चारिताार्थ्ये च युक्तमेवेति भावः । यथाश्रुतार्थ-

व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम् ।

मातुरिति । अत्र हि "ऋत उत्" ( पा० सू० ६।१।१११ ) इत्येकादेशशास्त्रं

शब्दरत्नम् ।

क्षीरपैण' इत्यादौ णत्वं सिद्धयतः । अत्रैकारस्यादसम्बन्धित्वं पे इत्यस्यैकारोत्तरपदत्वं चान्तवद्भावाधीनमिति बोध्यम् । व्यधिकरणमेवेति । प्रत्ययस्य सम्बन्धी यो विसर्गस्तस्य नेत्यर्थ इति तद्भावः । अगत्या च वाक्यभेदाऽसमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमिति तदभिमानः । नातीवेति । वैयधिकरण्यान्वयफलस्य कविभिः कृतमित्यादेः प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्येवं लक्षणया सामानाधिकरण्येनापि संग्रहसम्भवादिति भावः । व्याख्यादर्शोक्तसामानाधिकरण्ये तु लेशतोऽपि तदादराभावादती-

भैरवी ।

पुवद्योर्मितयस्य परादिवद्भावेन प्रत्ययतया सकार गतेऽप्युरित्यस्य स्थानिवद्भावेन प्रत्ययतया तदादेशस्य विसर्गास्तयोरित्यस्यापि प्रत्ययत्वमिति विसर्गे प्रत्ययावयवत्वमर्थादेव लब्धमिति तदानयनार्थमतिदेशापेक्षेति भावः । एकारोत्तरपदत्वमिति कर्मधारयः । अधीनमिति । ननु स्थानिवद्भावेन, असाधोयत्वात् । एतेनान्तादिवत्सूत्रं स्थानिवद्भावेन गतार्थमिति प्राचोक्तमपास्तमिति सूचितम् । 'पे' इत्यस्यकारोत्तरत्वं यद्यपि स्वतः सिद्धं तथाप्युत्तरपदत्वस्याशास्त्रीयत्वेन तदलाभादित्युक्तम् । हरदत्ताभिमतं वैयधिकरण्यमुपपादयति—प्रत्ययस्येत्यादिना । अगत्या-'कविभिः कृतम्' इत्यादौ गत्यन्तराभावेन । अभिमान इति । प्रत्ययपदस्य लक्षणया प्रत्ययसम्बन्धिबोधकत्वं तद्धर्मावच्छिन्नप्रतियोगिताकभेदवतोऽभेदेन विसर्गविशेषणत्वम् । एतेन सर्वेष्टसिद्धौ क्लेशानुसरणं व्यर्थमिति भाव. । लेशतोऽपीति । स्वस्य तस्य च मते प्रत्ययपदस्य प्रत्ययसम्बन्धिपरम् । एतावानेव विशेषः, स्वमते सामानाधिकरण्येन सम्बन्धः, तन्मते वैयधिकरण्येन । फलन्तु तुल्यम् । व्याख्यादर्शोक्तमते तु प्रत्ययपदस्य न लक्षणा, कवि-

भावप्रकाशः ।

त्यागफलमाह—अत एवेति । उत्तरार्धाक्षेपादेवेत्यर्थः । अत्रेति । समयेनेत्यर्थः । सम्बन्धित्वमिति । सान्निध्यादसम्बन्धेऽपि न्यायेनाकारान्तशास्त्रीयनिमित्तस्याभावत्वेनैकारान्ते अानयनेन तत्र तत्सम्बन्धित्वम् पाठ सिद्धमत एव पूर्वापरविरोधो नेति भावः । पे इत्यस्येति । तद्विशिष्टस्येत्यर्थः । अत एवाह—एकारेति । सौत्रानुवादः । तेन समासत्वम् । अन्यथापिसमासेन स्पष्ट एव । यद्यप्येकारत्वमशास्त्रीय तथापि तस्य स्वत.सत्त्वेनोत्तरपदत्वस्यैव शास्त्रत्वेन तस्यान्यशास्त्रीयत्वेपि विशिष्टसमासत्वरूपस्य तथाशास्त्रबोध्यत्वेन तद्विशिष्टविशेष्यधर्मत्वविशेषणधर्मस्यापि शास्त्रीयत्वेन विशिष्टानयन.निर्वाहमिति भावः । अधीनमिति । स्थानिवत्त्वं न मायस्याद्ः सम्बन्धितस्य शास्त्रीयत्वात् शास्त्रीयादसत्त्वस्योभयथाप्यस्थानिधर्मत्वाच्च । शास्त्रीयत्वं च विशेषतया शास्त्रबोध्यत्वमत एवैकाचूत्वादेर्न तत्त्वम् । अन्ये विशेषणतयाऽऽश्रयणात्, पक्षभेदेन वर्णयोः समुदायस्य वा स्थानित्वेन द्वयोरपि तद्धर्मत्वाच्चेति भावः । प्रसङ्गप्रतिषेधोपि तस्येष्ट स्तद्ध्वदितयाह—प्रत्ययस्येति । वैयधिकरण्य स्पष्टयितुं तथोक्तम् अन्यथान्यतरवैयर्थ्यं स्पष्टमेव । इत्यर्थइति । इतिसूत्रैकदेशार्थः । एव चैवकारेण मूलस्थेन तदनुवादान्तर्गतेन तत्रेदुपपत्स्यते वैयधिकरण्यानन्वयं तथावत्या मूलोक्तसामानाधिकरण्यव्यावृत्तिरत्र एव तत्रत्यापि सङ्गतिरिति बोध्यम् । अगत्येति । कविभिः कृतमित्याद्यनन्यथासिद्धयेत्यर्थः । अभिमान इति । लक्षणारूपपदे दोषद्वयोक्तवाक्यत्रयदोषतो लघुभूतस्य सहनेन तथान्वयेनेष्टसिद्धया तनेरभावेन तत्त्रयसहन सुधर्वत्युचितरनेन सूचितम् । अपिः पर्युदासमसमुच्चायकः । तेन वाक्यभेदादिक न । एव चेयतदादर इत्यनौचित्युक्तिसफलेति भावः । लेशतोपीति । तदन्वयफलस्य कथमप्यसम्भवात् अत्यन्तादरनिषेधोऽनुचितः । तन्मते

विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु "एकादेशशास्त्रनिमित्तात्" इति प्रचुर पाठ । तत्र एकादेशशास्त्र निमित्त यस्य उकारस्य तस्मादित्यर्थ ॥

---

शब्दरत्न

पेत्यसङ्गतमेव स्यादिति । अनेनोक्तव्याख्याया एव स्वाभिमतत्व सूचितवानित्यलम् ।

परम्परयेति । एकादेशशास्त्रसम्पन्नरेफस्यानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तक त्वमिति भाव । प्रचुर पाठ इति । ओषधीस्कृधीत्यादौ शसैकादेशे "कःकरत्करति कृधि-" ( पा० सू० ८।३।५० ) इति षत्वनिवृत्तिश्च तत्फलमुक्तम् । मूल तु तस्य फलस्य छान्दसत्वात् "छन्दसि वा प्र-" ( पा० सू० ८।३।४९ ) इत्यत्र "इण ष" ( पा० सू० ८।३।३९ ) इत्यस्य निवृत्त्या ऽदोषाच्च पदद्वयन्तमेव पठितमिति दिक् ॥

भैरवी ।

भिरित्यत्र दोषावारणञ्चेति तदादराभाव इति भाव । अनेन-अतावेति कथनेन । अलमिति । उक्तदोषगणापत्त्या स्वाभिव्याख्यवाधितेति सूचितम् ।

एकादेशशास्त्रमुकारादेर्न निमित्त न विसर्गे इत्यकारादेशशास्त्रनिमित्तकत्वेत्यनुपपन्नमत आह—एक देशेति । प्रचुर इति । इदुदुपध इतिसूत्र-'उरण रपर' सूत्रयोरेवन्द्वशनम्माष्य ऽस्ताल्पस्य प्र रत्त्वम् । तादृशपाठमाश्रित्य फलन्तम्ययासिद्धमित्याह-ओषधीस्कृधीत्यादाविति । ओषधिशब्दाच्छसि पूर्वसवर्णदीर्घे शस रुत्वस्य रुत्वविसर्गयो कः करत्' इत्यस्य प्राप्ति । इति षत्वेति । इति सूत्रप्राप्तषत्वस्येत्यर्थ । तत्र 'इण ष' 'स' इति च सम्ब ध्यते । कःप्रभृतिषु परेषु अदितिशब्दसम्बन्धिभिन्नस्य विसर्गस्थाने परस्य षः अन्यस्य तु स इति 'कस्कादिषु च' इति सूत्रस्येव तदर्थात्प्राप्ति षत्वस्य । अन्यथा परमसूत्रे तस्य सूत्र स्य सकारविधायकत्वेन व्याख्यातत्वादसङ्गति स्यात् । तत्फलम्-पदद्वयन्तपाठफलम् । वा ऽप्यर्थे । मूल—परमसूत्र । तस्य फलस्य छान्दसत्वादिति । सकारवर्जितस्य षकाराभावदर्शनादि षयप्रयोगस्य छान्दसत्वादित्यर्थ । छन्दसीति । पूर्वञ्चेत इत्यस्य "कस्कादिषु च" इत्यतत्प र्यन्तमेव सम्बन्धो भवतीति तेन सूत्रेण सकार एव विधीयत इति भाव । दिगिति । दिगर्थस्तु

भावप्रकाश

सूत्ररीत्या वाक्यभेदाद्याश्रित्या तथादशो निषेदश्च श्रूयत इति भाव । असङ्गतमेव स्यादिति । तथाचोक्त एव तस्याशय इति भाव । अत्र इति भाव इति पाठ । इष्टापत्ति खण्डयति—अनेनाक्तेति । अनीवान कथनेन लक्षणया सामानाधिकरण्यस्यैवेत्यर्थ । सूचितवानिति । यद्यपि ध्वनिनापेक्षयोक्त प्रसक्त तथ वि स्वरूपव्याक्तिनैव परोक्तिरिति न्यायेनान्यदीय लिखित्वा शब्दान्तरेण विच्छिद्य तथोक्त्या स्वीय मत ध्वनि तवानित्यर्थ । अन्यथोक्तदोषगणापत्तिस्तदाह—अलमिति । अस्याशयस्तूक्त एव ।

प्रचुर इति । उक्तसूत्रद्वयादिभाष्यादावसकृत्तथोल्लेखादिप्रचुरत्वमिति भाव । इति षत्वेति । इतिप्राप्त षत्वेत्यर्थ । कःप्रभृतिषु परेषु परतोऽदितिशब्दसम्बन्धिभिन्नस्य विसर्गस्यैव उत्तरस्य षोऽन्यस्य तु स इति तदर्थ । कस्कादिषु चेत्यत्रैवेति भाव । तत्फलमुक्तमिति । एतन्मते तत्पाठफलमप्युक्तमित्यर्थ । चोऽप्यर्थोऽत्र सम्पद्यते षत्वतुकोरिति सूत्रभाष्ये इति शेष इति भाव । मूल त्विति । कौमुद्या त्वित्यर्थ । तस्य फलस्येति । तत्र षत्वाभावरूपफलस्येत्यर्थ । छान्दसत्वादिति । लक्ष्यस्य सर्वस्य छान्दस त्वादित्यर्थ । सिद्धत्वादिति शेष । इदं चेण ष इत्यस्यानुवृत्तिमभिप्रेत्य । वस्तुतस्तस्यैव न "कस्कादिषु च" इत्यत्र तदनुवृत्तावप्यग्रेऽनुवृत्तौ मानाभावादित्याह—छन्दसीति । अदोषाच्चेति । तन्निवृत्त्या तेन सत्वमात्रविधानेनेष्टसिद्धे षत्वापत्त्यभावाच्चेत्यर्थ । तथा च न ज्ञापकोपयोग इति भाव । दिगिति । तदर्थस्तु

सरला ।

पदग्रहणस्य सार्थक्यमित्युच्यते तथाऽपि सर्पिरादिशब्दस्थसकारस्थानिकविसर्गस्य अनुवृत्तिपक्षेऽप्युत्पत्ति

मुहुःकामेति । इह "कुप्वो ≍क≍पौ" ( पा० सू० ८।३।३७ ) इति प्रवर्तते । वृत्तौ मुहुस्कामेति सकारः क्वचित् पठ्यते, तत्प्रामादिकमिति हरदत्तः ।

• द्विस्त्रिश्चतुरिति ( पा० सू० ८।३।४३ ) । इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुःशब्दोऽपि सुजन्त एव गृह्यते । कृत्वोऽर्थग्रहणं ज्ञापकम्—साहचर्यं न सर्वत्र व्यवस्थापकमिति । तेन "दीधीवेवीटाम्" ( पा० सू० १।१।६ ) इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम् । उभयत्र विभाषा चेयम् । चतुरित्यस्य "इदुदुपधस्य-" ( पा० सू० ८।३।४१ ) इति प्राप्ते, इतरयोस्त्वप्राप्ते । न च तयोरपि "इसुसोः सामर्थ्ये" ( पा० सू० ८।३।४४ ) इत्यनेन सिद्धिः शङ्क्या ।

शब्दरत्नम्

प्रामादिकमिति । पदादित्वेन "सोऽपदादौ" ( पा० सू० ८।३।३८ ) इत्यस्या-प्राप्तेरिति भावः ॥

साहचर्यमिति । न च रामलक्ष्मणावित्यादौ दृष्टसाहचर्यसम्बन्धस्याभिधानियाम-

भैरवी ।

पञ्चम्यन्तपाठो भाष्यसम्मत एवोचितः । अत एव "अपदान्तस्य मूर्धन्यः" इति सूत्रे-प्रकृत षग्रहणमनुवर्तते तेनैव सिद्धे मूर्धन्यपदग्रहणमर्थमिति विचारे "क्व प्रकृतमिणः ष" इति भाष्यं सङ्गच्छत इति षग्रहणस्य कःकरदिति सूत्रे सम्बन्धो भवत्येवेति । परममूले तु "कः करत्" इति सूत्रस्य सकारादेशमात्रविधायकत्वेन व्याख्यानं वृत्त्यनुसारेण । अत एव वृत्तौ अदितिः कर-दित्यत्र सकारादेश इत्युक्तम् । हरदत्तेन तु पूर्वोक्त-"अपदान्तस्य" इति सूत्रस्थभाष्यदर्शनेन "सकारादेश" इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतदिति व्याख्यातम् ।

दृष्टसाहचर्येति । लोकादावित्यादिः । साहचर्यसम्बन्धस्य—एकस्मिन्कार्ये परस्परसापेक्षत्वरू-पसम्बन्धस्य । नियामकत्वमिति । युगपदेवोभयोः प्रसिद्धार्थबोधकत्वमित्यर्थः । ' 'योगो वि-प्रयोगश्च' इत्यादिना हरिणा ऽयमर्थः सङ्गृहीतः । तदर्थस्तदुदाहरणानि चान्यत्र स्पष्टानि ।

भावप्रकाशः ।

पञ्चम्यन्तमेवोचितम् । अत एवापदान्तस्येत्यत्र "क प्रकृतम् ? इणः षः" इति भाष्यं संगच्छते । "कः क-रोत्"इति सूत्रे सकारादेश इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतत् तथाचादितिश्चदितिषेण इति हरदत्तो-ऽपि । किं च मवन्मतेऽप्यस्यासिद्धत्वेन "इणः षः" इति प्राप्तवारणाय तस्यावश्यकत्वम् । अत्र सत्य स्वतः स-त्वेनैकादेशशास्त्रनिमित्तकत्वाभावात् षष्ठ्यन्तपक्षे वारणं दुष्करमिति ।

अस्याप्राप्तेरिति । हरदत्तोक्तेरनुवादोऽयम् ।

दृष्टेति । लोकादाविति भावः । साहचर्यसम्बन्धस्येति । एकस्मिन्कार्ये प्रसिद्धपरस्परसापेक्षत्व-रूपसम्बन्धस्येत्यर्थः । नियामकत्वमिति । युगपदेवोभयोस्तत् । तेन नान्योन्याश्रय इति भावः । तदुक्तं हरिणा—संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति ।

एते संयोगादयो नानार्थशब्देषु शब्दार्थस्यानवच्छेदे संदिग्धे तदपाकरणद्वारा विशेषस्मृतिहेतवो निर्ण-यहेतव इत्यर्थः । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका

सरला

पक्षे वा प्रत्ययभिन्नत्वेन तस्यानेन सर्वत्र षत्वप्राप्त्या "नित्यं समासे" इत्यनेन उत्तरपदस्थविसर्गस्य इविर्धार्यायेति दिक् ।

( पा० सू० ८।३।४१ ) इति नित्यं षः।

व्यपेक्षाविरहेऽपीति। विष्टु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इह सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। यत्तु पारायणिका आहुः— 'करस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थः' इति। तद्भाष्यविरोधादुपेक्ष्यम्।

शब्दरत्नम्।

षतश्चेति। प्रतिपदोक्तस्य चेत्यपि बोद्धव्यम्। नित्यं ष इति। भाष्यप्रामाण्येनाश्राद्धु-र्षसिद्धयस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययसन्निधित्वात्कथं षत्वमिति न शङ्क्यम्। अत एव "चतुष्पाद्भ्यो ढञ्" ( पा० सू० ४।१।१३५ ) इत्यादिनिर्देशसङ्गतिः।

इत्यर्थ इति। असत्यन्तरत्वं पूर्वं सूचितम्। तद्भाष्येति। "अनुत्तरपदस्थस्य" इति किम्, परमसर्पिष्कुण्डिका" इति 'नित्यं समासे–" ( पा० सू० ८।३।४५ ) इति सूत्रस्थभाष्येत्यर्थः।

अथ सहितेति । न त्वयसो विकार, "जानपद–" ( पा० सू० ४।१।४२ ) इति ङीप्प्रसङ्गात् । अयस्कर्णीति । अय इव कर्णा यस्या । "नासिकोदरौष्ठ–" ( पा० सू० ४।१।५५ ) इत्यादिना ङीष् ।

अथ शिरसी ( पा० सू० ८।३।४७ ) । पदयोरिति । सूत्रे तु षष्ठ्या स्थाने प्रथमा बोद्धव्या । अधस्पदमिति । मयूरव्यंसकादित्वात्समास । शिरस्पदमिति । षष्ठीसमास ॥

इति विसर्गसन्धि ।

## ॥ अथ स्वादिसन्धिः ॥

ससजुषो रु ( पा०सू०८।२।६६ ) ॥ पदस्येत्यनुवृत्त ससजूभ्यां विशेष्यते, विशेषणेन तदन्तविधि । न च सजू शब्दांशे "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति निषेध शङ्क्य । तस्य प्रत्ययविधिविषयत्वात् । सान्त सजुष्श ब्दान्त च यत्पदं तस्य रु स्यात्, स चालाऽन्त्यस्य । एव स्थिते फलितमाह—पदा न्तस्यति । सजुष्षा वृस्यति । तदन्तस्य पदस्येत्यथ , तेन सजुष इत्यादौ नातिप्र

शब्दरत्नम् ।

सङ्गतप्रयोगमुचितमर्थं स्फुटप्रतिपत्त्य आह—न त्वयस इत्यादि ।

इति विसर्गसन्धि ।

तस्य प्रत्ययविधाविति । अत एव "यस्मिन्विधि " ( पा०सू० १।१।७२ ) इति सूत्र भाष्ये प्रत्ययविधिभिन्न ' अप्तृन्' ( पा० सू० ६ ४।११ ) इत्यादौ गृह्यमाणग्रा भवता ।

सिरत आह—पदान्तेति । गवन्त यत्सूत्र ' नत इह्कमि ' इत्यत्र कुशति तद्ग्रहणाद् परसूत्र कुणाति कृत्वा विग्रहप्रदर्शनाय न त्वयसा विकार इत्य । । कुशशब्दाऽन्त्य च विशेष्यत्वम् "जानपद" इति कार्यसङ्क्रामितस्येत्र तात्पर्यम् । एवञ्च विशेषणप्रनाकरणेन विशेष्य विशेषणता नत स्वयकल्पति भाव ।

इति श्रीमद्रत्नप्रकाशिकायां विसर्गसन्धिप्रकरणम् ॥

मत एव—ग्रहणवत इति वचनस्य प्रत्ययविधिविषयत्वादेव । सङ्कृद्धे इति । यदि सर्वत्र तस्य

भावप्रकाश ।

प्रसङ्गादिति रत्नाकरोक्तदर्शनमत आह—आयन्तति । परमपूर्वे कुशीति विशेष्यवाचकनीमानुरोधस्य प्रयोगेत्यर्थ । कुशशब्दात्तथाविवक्षायां तेन ङीपविधेरिति भाव । एव च विशेषणप्रतीक धृत्वा विशेष्य प्रतिपादन क्रममिति फलितम् । कुशेतीति धृत्वा तथा वक्तव्ये एवमुक्तिरन एवैकविग्रहमङ्गीति ध्वनयि तुमिति बोध्यम् । स्फुटेति । एतेन व्यर्थोय ग्रन्थ इत्यपास्तम् ।

इति विसर्गसन्धि ।

अविरतदन्यसमुच्चायक । सङ्कृद्धेन इति । अन्यथा तत्रापि निषेधापत्या तदसङ्गति स्पष्टैवेति

सरला ।

न प्रवर्तते इतीति । अप्रत्ययग्रहणेन स्थानिवदादेशसूत्रदृष्ट्या त्रिपाद्या नासिद्धत्वमिति विशेषापे क्षणेन "अच परस्मिन्" इत्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वसत्त्वादिति भाव ।

इति विसर्गसन्धिप्रकरणम् ।

सङ्ग । न च सजुरित्यत्राव्याप्तिः "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति निषेधा दिति वाच्यम् । "येन विधि" इति सूत्रे शब्दकौस्तुभेऽस्य प्रत्याख्यातत्वात् ।

---

शब्दरत्नम् ।

तिपदिकेनापि तदन्तविधिप्रतिपादनं स्वमा परमस्त्रसत्युदाहृत च सङ्गच्छते । अस्य "समासप्रत्ययविधौ-" इति निषेधानुवादकताया एव युक्तत्वाच्च । परत्वस्य ज्ञापकं "सपूर्वाच्च" (पा०सू०४।२।८७) इति सूत्रम् । अन्यथा 'पूर्वादिनि' (पा०सू०४।२।८६) इत्यत्र तदन्तविधिनैव सिद्धे किं तेनतत्? प्रत्ययविधौ प्रतिषेध "इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम् । अत एव तदन्तविधिसूत्रभाष्ये 'समास-"इत्यादिनिषेधस्य न कथनमिति बोध्यम् । प्रत्याख्यातत्वादिति । अस्याः फलाभावात् । "सूत्रान्ताट्ठक्" "दशान्ताड्ड" (पा०सू०५।२।१४५) इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तिरिति भाव । ननु "एकगोपूर्वात्-" (पा०सू०५।२।११८) इत्यस्य केवलेकशब्दगोशब्दयोरप्रवृत्त्यर्थं ऽऽवश्यकी "सूत्रान्तात्-" (पा०सू०५।२।१४४) 'दशान्तात्' (पा०सू०५।२।१४५) इत्यर्थं च । तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्साम र्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या । न च भाष्ये यथाख्यातादिव "सूत्रान्तात्-" इत्यादौ विशे

भैरवी ।

वचनस्य प्रवृत्ति स्यात्तदा "परमस्वसा" इत्युदाहरणविरोध स्पष्ट एव । अस्य-ग्रहणवतेति वचनस्य । अनुवादकता—तद्धालिङ्गस्यनिषेधानुवादकतेत्यर्थं । युक्तत्वादिति । फलसार्थबोधकत्वकल्पने लाघवस्य सम्भवेन युक्तत्वादित्यर्थं । नन्वस्मिन्वचने ज्ञापकरूपत्वं वृत्तौ कृतमित्यस्यातिरिक्तत्वमेव युक्तमत आह—परत्वस्येति । ज्ञापकमिति । उपक्रम उक्तमिति शेष । वस्तुत [illegible] तस्य वार्तिकस्य जागरूकत्वाज्ज्ञापकमेव तत्सूत्रमन्नेति बोध्यम् । इत्यस्यैवेति । एतेन ज्ञापकत्वासम्भव एव ध्वनित । स्वकल्पनायाम्मानमाह—अत एवेति । अनतिरिक्तत्वादेवेत्यर्थ । अस्या —व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति परिभाषायाः । प्रत्याख्यानतत्त्वं स्पष्टयति—फलाभावादिति । ननु केवलसूत्रादिशब्दाट्ठगादिवारणमेव फलमस्त्वित्यत आह—सूत्रान्तादिति । इति भाव इति । कौस्तुभ इत्युक्तयनन्तरप्रत्याख्यातत्वादिति कथनस्य भाव । एतेनारुचिर्ध्वनिता । तामेवाह—न चेत्यादिना । पूर्वोक्तमन्तग्रहणसामर्थ्यं खण्डयति—तथा तेति । आवश्यकमिति । एतेन चरितार्थत्वं दर्शितम् । भाष्ये यथाख्यातादिवेति । 'येन विधिस्तदन्तस्य" इति सूत्रे पूर्वं वा-

भावप्रकाश ।

भाव । तथा अतिरिक्तत्वमभ्युपेत्य मूले स हेतुरुक्त । वस्तुतस्तदेव न लाघवात् मानाभावात्फलाभावा च्चेत्याशयेन हेत्वन्तर तत्रैवाह—अस्येति । ग्रहणवतेति निषेधस्येत्यर्थं । परमप्यऽपि । इति निषेधेति । इविवाडिकस्यप्रत्ययांशे तन्निषेधे यथ । युक्तत्वाच्चेति अफलसकल्पनात फलसकल्पनायां लाघवात् । एवं च ज्ञापकोक्तिरेव नेति भाव । ननु फलाभावदावपि मानसत्वादनिरिक्तत्वं स्यादत आह—परत्वेति । ज्ञापकमिति । तद्वृत्तिकारादिभिरुक्तमिति शेष । तदुपपादयति—अन्यथेत्यादि किन्तेनेत्यन्तेन । अन्यथा—तत्परिभाषानङ्गीकारे । इत्यस्यैवेति । अन्यथा तेनैव निषेधात्तस्यावश्यकत्वेन तज्ज्ञापकत्वासङ्गतिरेव स्यादिति भाव । अत्र कल्पनायां मूलमप्याह—अत एवेति । तस्य तदनतिरिक्तत्वादेवेत्यर्थ । अप्रत्याख्याने ग्रहणवतेत्यस्य निर्मूलत्वापत्त । न च तत्सूत्र मूल त्वदुक्तपरिभाषया पूर्वशब्देऽनापत्तरिति । प्रत्याख्यातत्वे हेतुरयं न युक्त उक्तरीतेरित्यरुचेनयन्नाह—फलाभावादिति । ननु केवलसूत्रशब्दादेष्ठगादिवारणं तत्फलमत आह—सूत्रान्तादिति । इति भाव इति । सूचितामरुचिमाह—नन्वित्यादिना । केवलशब्दद्वन्द्वविशेषणम् । इत्यर्थं चेति । तावदिष्टेऽर्थस्यानुपङ्ग । तत्रान्तेति । तयोरित्यर्थं । आवश्यकमिति । तथा च चरितार्थ तदिति भाव । भाष्ये यथाख्याता

"व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति, "ग्रहणवता–" इति च परिभाषाद्वयमपि

---

शब्दरत्नम् ।

णविशेष्यभावव्यत्यासेन सिद्धे ऽन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः "समासप्रत्ययविधौ–" इत्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात् । न चास्यां मानाभावः । "पूर्वात्सपूर्वादिनिः" (पा० सू० ५।२।८६) इत्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात् । न च "इष्टादिभ्यः" (पा० सू० ५।२।८८) इत्यत्रानुवृत्त्यर्थं तथा पाठः, अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात् । एकयोगेऽपि

भैरवी ।

तिकम्भाष्ये तस्य सूत्रस्य प्रयोजनप्रदर्शनपरमस्ति तत्र भयश्चास्यत्वयङ्चेति समासः । एतेन

व्यबोधः तेन 'भयङ्करः' 'अभयङ्करः' इति भवति, एवमाढ्यङ्करणं स्वाढ्यङ्करणमिति भवति । एवं सुभगादिषु बोध्यम् । तेनानुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः । प्रत्ययविधाविति । निषेधस्यैतन्मात्रतात्पर्यग्राहको नतु स्वार्थतात्पर्यग्राहक इति कल्प्यते । एवञ्च सूत्रान्ताट्ठिति सूत्रे ऽन्तशब्दाभावेऽप्यनुवृत्तस्य प्रातिपदिकादित्यस्य तत्र विशेष्यबोधकत्वस्वीकारेण सूत्रान्ताट्ठप्रत्यये सिद्धे ऽन्त ग्रहणन्तत्र व्यपदेशिवद्भावाप्रवृत्तौ ज्ञापकम्भविष्यतीति भावः । समाधानमाह—समासेत्यादिना । आदिपदेन "ग्रहणवता" इत्यस्य सङ्ग्रहः । विशेष्यत्व इति । एवञ्च तत्रान्तग्रहणाभावे सूत्रशब्दान्तान्न स्यादित्यन्तशब्दोपादानमावश्यकमेवेति भावः । विपरीतस्य—उपात्तस्य तत्र विशेषणत्वमित्येवंरूपस्य । तस्य—विशेषणविशेष्यभावस्य । नचेति । अस्य मानाभाव इत्यत्रान्वयः । अस्याम्—व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाम् । परोक्तन्दोषमुद्धरति—नचेष्टादिभ्य इत्यादिना । अत एव—सपूर्वादित्यस्यानुवृत्तेरेव । ज्ञापकपरेति । अस्य "येन विधि" इति सूत्रस्थेत्यादिः । एकयोगनिर्दि-

भावप्रकाशः ।

ष्विति । कृतादिपदबहुव्रीहिणा तेन भयशब्दस्य समाहारद्वन्द्वः । "तृतीयादिषु" इति पाक्षिकं पुंवत्त्वं तेन "मेघर्तिभयेषु कृञः" "आढ्यसुभग" इति सूत्रोक्तस्य भयशब्दस्याढ्यादेश्चोपपदस्य ग्रहणम् । तत्रोपात्तयोर्विशेषणत्वमनुवृत्तयोः शब्दयोर्विशेष्यत्वमिति भयङ्करः, अभयङ्करः, आढ्यङ्करणम् स्वाढ्यङ्करणमित्यादिसिद्धिः । "क्षेमप्रियमद्रेऽण् च" इत्यत्र तु वैपरीत्यमिति भावः । विशेषणेति । अनुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः । अत्र दृष्टान्तदार्ष्टान्तिकयोर्व्यत्यासः प्रत्ययविधाविति निषेधार्थैतन्मात्रतात्पर्यकत्वं न स्वार्थे इति भावः । सूपपादमिति । तथा च सा नैतद्यनि भावः । विध.विरयादेरिति पाठः । तात्पर्यग्राहकस्येत्यत्राभेदेनान्वेति इति केचित् । वस्तुतस्तु इत्यादीनामिति पाठेपि वेदाः प्रमाणमितिवदभेदान्वयसम्भवान्न क्षतिरिति बोध्यम् । तात्पर्यग्राहकत्वस्येति पाठे तु नोक्तशङ्कापीति बोध्यम् । आद्यपाठ एव युक्तः । अत एव बहुवचनासङ्गतिरपि नेति तत्त्वम् । आदिना मूलोक्तग्रहणवतेत्यस्य सङ्ग्रहः । विशेष्यत्वे इति । तत्सैच्छिकत्वेन व्यत्यासस्यापि सिद्धत्वादिति भावः । एतेन विशेष्यविशेषणभावयोर्यथेष्टत्वादेव सिद्धौ ज्ञापकानपेक्षत्वेन त्वदुक्तिर्व्यर्थं "सपूर्वाच्च" इति सूत्रं मा स्त्विति आमत चेति मन्दोक्तमपास्तम् । तस्य तात्पर्यग्राहकत्वात् सूत्रारम्भवर्णने मास्त्वित्युक्तेरयुक्तत्वाच्च । तस्य–विशेष्यविशेषणभावस्य । एतावता स फलत्वमुपपाद्य समूलत्वमुपपादयति—नचास्यामित्यादिना । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यत्रेत्यर्थः । भाष्योक्तं दोषमुद्धरति—नचेति । तथा पाठः—पृथक्पाठः । ज्ञापकपरेति । "येन विधि"

प्रत्ययविधिविषयकमिति दिव उत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च । एवं च परम-

शब्दरत्नम् ।

तत्रैव स्वरितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च । व्यपदेशिवद्भावस्य प्राति-पदिके निषेधस्वीकारादेव "नान्तादसंख्यादेः–" ( पा०सू०५।२।४९ ) इति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्याह—व्यपदेशिवद्भाव इत्यादि । दिव उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः । एवं च "दिव उत्" ( पा०सू०६।१।१३१ ) इति सूत्रे हरदत्तेन "इन्द्रे च" ( पा०सू०६।-१।१२४ ) इति सूत्रे कैयटेनोक्तमिति भावः । "येन विधिः–" ( पा०सू०१।१।७२ ) इति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयताऽस्येति वदता स्पष्टमेव प्रत्ययविधिविषय-तोक्ता । "असमासे निष्कादिभ्यः" ( पा०सू०५।१।२० ) इति सूत्रे भाष्ये कैयटे च

भैरवी ।

ग्रामो दचिदेकदेशोऽप्यनुवर्तते इति परिभाषामाश्रित्याह—एकयोगेऽपीति । तस्य परिभाषायां ज्ञापकान्तरमपि सूचयन्नित्याशयेनाह—व्यपदेशीति । तद्वैयर्थ्यम्—सूत्रवैयर्थ्यम् । एतच्च सूत्र-मार्थक्यन्तत्फलमिति भावः । खण्डनकारोक्तदोषमुद्धरति—दिव उत्सूत्रमिति । अन्तादिशब्देति । एतेषामुपादानस्तत्रैव व्यपदेशिवद्भावाप्रवृत्तिरित्यर्थः कैयटस्यापि सम्मतइति मूलोक्तं सप्रमा-

भावप्रकाश. ।

इति सूत्रस्थोक्तप्रमाणाकारमाष्येत्यर्थः । एवं चाकारस्यात्रानुवृत्तिर्नेति भाव. । इदं च "एकयोगनिर्दिष्टानाम्" इति न्यायावष्टम्भेनोक्तम् । 'एकयोगनिर्दिष्टानामेकदेशोऽपि' इति न्यायाश्रयणेन तेषामिदं स्याह-एवेति । तत्रैव-सपूर्वादिषष्ठ्येव । एकदेशे-यथोऽस्य प्राचामनुरोधेनैव । ज्ञापकान्तरं सूचयन्नु-क्तार्थं द्रढयति—व्यपदेशिवदिति । निषेधस्याश्रयणादिति । तदर्थकपरिभाषास्वीकारादेवेत्यर्थः । चः समुचितसमुच्चायकः । तद्वैयर्थ्यमिति । सूत्रवैयर्थ्यमित्यर्थः । एतेनासंख्यादेरिति विशेषणसामर्थ्यात्तत्र तत्प्रवृत्त्येष्टसिद्धावफलत्वेन सा नेत्यपास्तम् । सूत्रवैयर्थ्यस्यैव सत्त्वात् । उक्तरीत्या मुख्यफलदोः सत्त्वेना-वश्यकत्वाच्च । एवं च कौस्तुभादिग्रन्थस्य एवेति भावः । खण्डनकृदाद्युक्तं दोषं खण्डयति-दिव उदिति । चस्त्वर्थे । इतिभावपदमिति सूचितमरुचिं ध्वनयितुं मूलं योजयति—येनेति । तादीति । "स्तनान्ताद्ठक्" "व्रतान्ताद्ठक्" इत्यादिसूत्रस्थेत्यर्थः । आदिना पूर्वादिशब्दपरिग्रहः, ज्ञापकस्य सजातीयापेक्षत्वात् । अन्यत्र सर्वत्र तस्य चेत्यादिनैव सिद्धेरिति भावः । ताऽस्येतीति । व्यपदेशिवदिति निषेधस्येत्यर्थः । स्पष्टमेवेति । प्रत्ययविध्यन्यत्र तेषामभावादिति भावः । नन्वेवं 'पञ्चम' इत्यादावपि प्रागुक्तरीत्या निषेधापत्त्या तद्वैयर्थ्यापरिहारस्तद्विषयत्वस्य बाध्या । अतएवान्तादीत्यत्रान्तशब्दवदादिशब्दोऽपि तेन प्रयु-क्तः । एवं च स न प्रयुक्तयर्थः । पूर्वादिशब्दस्य तूपलक्षणत्वेन ग्रहणं बोध्यम् । एवं च तद्वैयर्थ्यतया न लभ्यते इतीदमयुक्तमत एवायं कैयटः, परिभाषेन्दुशेखरे सम्मतित्वेन न लिखितोऽत आह-असमास इति अनयोः-मूलोक्तपरिभाषयोः । असमासग्रहणप्रयोजनकथनावसरे "आर्द्रगोपुच्छ" इत्यत्र तदन्तविधौ पारमगोपुच्छिकमित्यत्र ठक्प्रतिषेधाट्ठञ् फलमित्युक्त्वा तत्खण्डके विधौ प्रतिषेधः प्रतिषेधश्चायमिति भा-ष्ये उक्ता ध्वनिता च । तत्कैयटे स्पष्टमुक्ता चेत्यर्थः । एतेन तयोः सामान्यविषयत्वस्य सौरदेवेनान्यम-तत्वेनोक्तत्वेन तदभिप्रायाप्रकाशोक्तिरिति । मूल चिन्त्यमिति खण्डनकृदाद्युक्तमपास्तम् । एवं च मूले कै-यटहरदत्तेति नारुचिबोधकम् । एतेनात्रारुचिबीजं तु पारमगोपुच्छिकं गौपुच्छिकमित्यादाविष्टप्रत्ययाना-पत्तिः । आर्द्रगोपुच्छेत्यस्य पर्युदासतया प्रत्ययविधिविषयत्वात्प्रसज्यप्रतिषेधमाश्रित्य निषेधस्य कल्पने तु स्फुटमेव गौरवमितिवदन्तो मान्याः प्राचामनुरोधेनेति ध्वनितम् । उक्तभाष्यादिविरोधापत्तेः । इयञ्च 'ग्रह-णवता' इत्यनुवृत्त्या यया कयाचित् ग्रहणवता प्रातिपदिकेन स नेत्यर्थोऽङ्गीकारात्प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे, तेनोगितश्चेत्यत्र न दोष इति "उगितश्च" इति सूत्रे एव भाष्ये स्पष्टम् ।

सजूर्भ्यामित्याद्यपि निर्बाधम् । एवं स्थिते इह सजुष्शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापातत इत्यवधेयम् ।

भोभगो ( पा०सू०८।३।१७ ) ॥ असन्धिः सौत्र इति । भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस्, भगोस्, अघोस्, इति सान्तं रान्तं वाऽनुकृत्य भो इत्यादीनां त्रयाणामलोऽन्त्यस्य य' स्यादपूर्वस्य योऽश्चेति व्याख्यायते, तर्हि असन्धिर्न्याय्य एव । युक्तं चैतत् । अन्यथा विभोरिदं, सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य सुप्रभगोरिदं, रवेरिदमित्यत्रापि यत्वापत्तेः । भवति ह्ययं भोशब्दादिपूर्वो रुः । न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम् । "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादी-

---

शब्दरत्नम् ।

स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक् । इत्याद्यपीति । आदिना सजूर्भ्यामिति ।

ननु सान्तानुकरणे "विभाषा भवद्-" इति वार्तिकनिष्पन्नानां ग्रहणं न स्यादत आह—रान्तं वेति । कृतरुत्वानुकरणमित्यर्थः । अलोऽन्त्यस्येति । न च भो राजसे इत्यादौ

भैरवी ।

प्रमेवेति भाव. । अनयोः—मूलोक्तपरिभाषयोः । तत्र भाष्ये ऽसमासग्रहणप्रयोजननिरूपणावसरे "आर्हादगोपुच्छ" इत्यत्र तदन्तविधौ परमगोपुच्छिकमित्यत्र ठक्प्रतिषेधाट्ठञ् सिद्धो भवति, ततस्तदन्तविधिप्रतिषेधलक्षणभावनायां विधौ प्रतिषेधः प्रतिषेधश्चायमित्युक्तम् ; तेनोक्ता प्रत्ययविधिविषयता ध्वनिता कैयटेन च स्पष्टीकृता । दिगिति । दिगर्थस्तु यद्गोपुच्छेत्यस्य पर्युदासपरतया व्याख्यानेन प्रत्ययविधित्वपरत्वं, तन्न युक्तम् उक्तभाष्यविरोधापत्तेरिति । नन्वपिशब्देनैव निर्वाहे आदिपदोपादानमनर्थकमत आह—आदिनेति । तथाचापि शब्दः परमसजूरित्यस्य समुच्चायक. ।

न स्यादिति । उत्तरग्रन्थानुरोधेनोभयोरपि तयोर्ग्रहणमिति भावः । कृतरुत्वेति । तन्त्रेण

भावप्रकाशः ।

दगिरस्य प्रत्ययादिसाधारणत्वात्प्रातिपदिकादित्यस्यानुवृत्तावपि सूत्रे तस्य स्वरूपेणानुच्चारणाच्चेति तद्भावः । यस्तु प्रत्ययविधीयते तस्य प्रत्ययकर्मकविधानस्य तत्प्रत्ययसम्बन्धिमात्ररूपविधीत्यर्थः । अत एव विधौ प्रतिषेधः, प्रतिषेधश्चायम्' इत्येवोक्तं भाष्ये, न तु प्रत्ययेऽपीति । अत एव च "येन विधिः" इत्यत्र तथा कैयटेनोक्तमिति । तत्र, यदश्मयुगिति इत्यत्र नान्तादित्यत्रावैरूप्येणोक्तसिद्धान्ते तदत्र दोषदृष्टेर्दुर्वचत्वात् । अत एव पूर्वमनयोरप्रवृत्त्या तयो गौरवेमिति वदन्तो मान्याः प्राचामनुरोधेन इत्यर्थेनाचरणमथ उक्तं तत् । एवं च "नान्तादसंख्यादेः" इत्यादौ 'असंख्यादेः' इति विशेषणवैयर्थ्यं सूत्रेऽदर्शि अपदेशिवद्भावाप्रवृत्तिरिति ध्वनितम्, उक्तभाष्यादिविरोधापत्तेरिति बोध्यम् ; तदाह—दिगिति । नन्वपेः सत्त्वेनादिर्व्यर्थोऽत आह—आदिनेति । गृह्यत इति शेषः । एवं च अनयोरप्रवृत्त्या तयोर्द्वयो फलद्वयमुक्तम् । अपिस्तु परमसजूरित्यादिसमुच्चायक इति भावः ।

न स्यादिति । इष्टापत्तिस्तु न । उत्तरग्रन्थविरोधापत्तेरिति भावः । ननु सान्तानुकरणपक्षे रान्तत्वस्य प्रतिपदोक्तत्वेन भोभगोअघोस्थितरस्य लाक्षणिकत्वान्नानेन ग्रहणं स्यादनन्वेषणात् । इष्टापत्तिस्तु प्राग्वत्, किञ्च उच्चार्यासिद्धिरत आह—कृतरुत्वेति । तन्त्रेण कृतरुत्वानां तेषां द्विविधानामनुकरणमित्यर्थः । एवं च कृतरुत्वावस्थान्वेषणे लाक्षणिकत्वाविशेषात् द्वयोरप्यत्र शास्त्राभ्यां सामान्यविशेषोल्लेखेन विधानेऽपि तत्करणोत्तरं तावन्मात्रान्वेषणेन शास्त्रान्वेषणाभावेन परिभाषानवतारात् ; वाशब्द एवार्थ इति भावः ।

नामपि लाक्षणिकत्वाविशेषात्। अनर्थकत्वमप्युभयत्र तुल्यम्। रुविशिष्टानामेवा-थवत्त्वात्।

ननु रेरुकारस्यानुबन्धत्वाद्रेफमात्र विसर्गस्य स्थानि, तथाच "अन-ल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्कयाह—न ह्ययमिति। यथाऽग्रहीदि-त्यत्र "ग्रहोऽलिटि" (पा०सू०७।२।३७) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् "इट ईटि" (पा०सू०७।२।२८) इति प्रवर्त्तते, एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्ते-तेति भावः। तथा च स्थानिवत्सूत्रे भाष्यम् "विशिष्टं ह्येषोऽनल्माश्रयते इटं नाम"

---

शब्दरत्नम्।

"रो रि" इति लोपे कृते एकदेशविकृतन्यायेन भो.शब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम्। तेषामभिधाने पूर्वां रोः पूर्वस्य च रोरिति व्याख्यानेनाद्दोषो बोध्यः। अत्र पक्षे ऽभोशब्दान्तद्वन्द्वे षष्ठ्याः सौत्रो लुक् बोध्यः।

भैरवी।

वार्तिकेन कृतत्वस्याप्यनुकरणमित्यर्थे, तथाचोभयोरपि संग्रहः। लोपे इति। यत्वासिद्धेति शेषः। अभिधाने इति। स्वोच्चियमाण इति शेषः। एतेनानभिधानकल्पनयाऽत्र समाधानेऽपि "भो राजन्" इत्यस्य दर्शनेनानभिधानकल्पनायाम्मानाभाव इति दर्शितम्। अपूर्वस्येति। अः पूर्वो यस्येत्यर्थः। एवञ्च "रो सुपि" इति सूत्रस्थं रोरित्युभयत्र सम्बध्यत इति सिद्धम्। अत्र पक्षे—कृतत्वस्यानुकरणपक्षे। अन्यथाऽपूर्वान्तद्वन्द्वात्षष्ठीकल्पने क्वचिद्वैयधिकरण्येन क्वचित्सामानाधिकरण्येनान्वयो दुर्घट स्यादितिभाव। अत्र पक्ष इति कथनेनायम्पक्षो न युक्त इति ध्वनितम्। एवं सति वाक्यभेदस्य षष्ठ्याः सौत्रलुकश्च कल्पनायाङ्गौरवस्य स्फुटत्वात्। परममूलोक्तपक्षे तु अभोशब्दान्तद्वन्द्वस्य पूर्वशब्देन बहुव्रीहिरिति न दोषद्वय-मिति भावः।

भावप्रकाशः।

लक्षणप्रयत्नपरान्यानुकरणमिति परमार्थः। एतेनात्र टीकाकृद्व्याकरणे करोपोऽयं पदवनरणकान्‌द्व्याख्या नावतरणोऽलदोष इति युक्त चैवदित्यादिना पक्षद्वयसमर्थनं चिन्त्यमिति खण्डनकृद्रत्नाकरोक्तं, तुल्यार्थाद्दु विकल्पेऽपीति सूत्रविरोध इतिमन्दोक्तं चापास्तम्। लोपे इति। यत्वासिद्धेति भावः। पूर्वेति। लौकिकेनेत्यर्थः। भो शब्दत्वादिति। सूत्रे तस्य निमित्तत्वेनोल्लेखादिति भावः। एतेन तदत्र तत्त्वेऽपि सा न्यानुकृतभो.शब्दाभावेन तदनापत्त्या यथाश्रुतमूलसङ्गत्या मङ्क्त्वा व्याख्यानानौचित्यमिति मन्दोक्तमपा-स्तम्, तदुक्तेः। सान्तत्वस्य लक्ष्ये क्वाप्यभावाच्च। सान्तत्वस्य सूत्रेऽनिमित्तत्वाच्च। तेषामिति। यत्र इत्यादिः। अभिधाने इति। भावस्यकत्वात्स्वोच्चियमाणे इति शेषः। तस्यानभिधानेऽपि भोराजन् इत्या-दीनामुपलभ्यमानत्वाद्दोषतादवस्थ्येन तदनभिधाने मानाभावादिति भावः। अपूर्वस्य च रोरिति। अद-न्तपूर्वशब्दयोर्बहुव्रीहिः. समानाधिकरणं तदुविशेषणं तत्पूर्वस्य रोश्चेत्यर्थः। एव च मूले रोरित्यस्य प्रागपि सदन्वयः सूचितः। एतेनाव्लोन्यपरिभाषयानस्थस्येति वदन्तो रत्नाकरदण्डिप्रभृतयश्चिन्त्या एवेति सूचितम्। मूले तु कस्यस्याल इति तत्तत्स्वरूपकथनं न तु परिभाषासञ्चार इति भावः। अत्र पक्षे मूलोक्तवाक्यभेदगौर-वाद् गौरवान्तरमाह—अत्र पक्षे इति। कृतत्वस्यानुकरणपक्षे इत्यर्थः। षष्ठ्या इति। ततः षष्ठ्या इत्यादिः। अन्यथा अपूर्वान्तद्वन्द्वे एकषष्ठ्या क्वचित्सामानाधिकरण्येन क्वचिद्वैयधिकरण्येनान्वयो न लभ्येतेति भावः। तथा च पदचतुष्टय फलितम्। सौत्रइति। एतच्च सौत्रत्वस्य तुल्यत्वेऽपि वाक्यभेदोऽतिरिच्यत इति भावः। परममूलोक्तपक्षे तु अभोशब्दान्तेन द्वन्द्वे पूर्वशब्देन बहुव्रीहिरिति नेदं दोषद्वयमिति बोध्यम्। यथा-

इति । इतोऽपि हेतोर्धात्वङ्गेत्यादिपरिगणनमशुद्धमित्यवधेयम् । निपाता इति । "भोभगो–" (पा०सू०८।३।१७) इति सूत्रे निर्दिष्टाभ्यादेराकृतिगणत्वात्तत्र बोध्याः । तथा च "विभाषा भवद्भगवत्–" इति वार्तिकं नाश्रयणीयम् । अन्यथा

---

शब्दरत्नम् ।

**अवधेयमिति** । यदि "प्रह्रोऽलिटि" (पा०सू०८।२।१८) इति सूत्रे इट स्थानित्वेन निर्दिष्ट इति तत्रानलाश्रयणं प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यम् , "अनल्विधौ" इत्यस्य स्थान्यवृत्तिधर्माश्रये स्थानिसम्बन्धन्यवृत्तिधर्माश्रये च नेत्यर्थस्तत्र स्थान्यलूरेफवृत्तित्वस्य स्थानिवत्त्वेन दुर्लभमल्विधित्वात् ; स्पष्टं चेदं प्रकृतसूत्रे भाष्ये ।

भैरवी ।

अवधेयमिति कथनेन ध्वनितमर्थं स्पष्टयति—यद्यपीत्यादिना । तत्र—"हट ईटि" इति सूत्रे । प्रकृते—"भोभगो" इत्यत्र । वैषम्यम्—अलाश्रयणम् । यथा प्रकृते ऽलाश्रयणन्तथोपपादयति—अनल्विधेति । तत्र—"देवाः सन्ति" इत्यत्र । दुर्लभमिति । एवञ्च सिज्लोपविधायकं यत् "हट ईटि" इति ततोऽस्य वैषम्यं स्पष्टम् ।

नचैवं हे रामेत्यादावपि स्थानिसकारवृत्तित्वस्यादेशे लोप आगमनन्दुर्लभमिति कथं रुपदत्वमिति वाच्यम् , सान्तानिदपदत्वस्यैकदेशविकृतन्यायेन 'सान्तस्य समुदायस्याकारान्तादेशः' इति "सर्वे सर्वपदादेशा" इति रीत्या समुदायादेशत्वकल्पनेन स्थानिवद्भावेन पदत्वस्य सुलभत्वात् । आवश्यकञ्च समुदायादेशत्वकल्पनम् । अन्यथा आदेशस्य लोपस्याभावरूपतया ऽर्थबोधकत्वासम्भवेन स्थान्यर्थाभिधानसमर्थस्यादेशत्वमिति प्रवादस्याकोप स्यात् । नचैवमपि 'दीर्घोद्दो निदाघ' इत्यत्रादेशे सुप्त्वाभावेनासुपीति निषेधाप्रवृत्तौ रेफापत्तिरिति वाच्यम् , सावपि पदम्भवतीति पक्षाश्रयणेन हल्ङ्यादिलोपात्प्राक् तेन निषेधेन रुत्वाभावे रु , ततो दघदन्तस्याकारान्तादेश इति कल्पनया साधुत्वस्य सम्भवात् । यत्र ह्यभावरूपादेशस्तत्र ह्येवं कल्पना, यत्र तु भावरूपादेशस्तत्र तु श्रौतस्थान्यादेशभावमादायाल्विधित्वम् । अत एवानल्विधाविति चरितार्थम् । अन्यथा 'व्यूढोरस्केन' 'द्यौः' 'पन्थाः' इत्यादावपि समुदायादेशत्वकल्पनेनानल्विधित्वञ्च स्यात् ,'द्यौः' 'पन्थाः' इत्यादौ हलन्तत्वस्याशास्त्रीयत्वात्स्यातिदेशासम्भवाच्च विशेषणतया ऽलाश्रयणस्य तावतापि सम्भवाच्च । नचैव

भावप्रकाशः ।

अनुमूलप्रसङ्गात् ध्वनयितुमवधेयपदसूचितमर्थं पूरयति–यदीत्यादि । तत्र हट ईटीत्यत्र।प्रकृते–स्विति । भोभगोऽस्यत्र रिवत्यर्थे । वैषम्यम् । अलाश्रयणम् । नन्वनल्विधाविति सामान्योक्त्या कथमिदं वैषम्यमत आह–अनल्विधि । अलश्च स्थानिसम्बन्धस्योकार्थद्वयस्य च यथावश्यकत्वं तथा तत्रैव प्रतिपादितम् । ननु सिज्लोपे विशिष्टाश्रयणवत्त्वेऽपि तथैवैतद्दृष्टान्तेन वैषम्याभावोऽत आह–तत्रेति । देवाः सन्तीत्यत्रेत्यर्थः । एवञ्चेत्यादि । दुर्लभमिति । तथा च तत्साद्दृश्यमकिञ्चित्करमिति भावः । ननु हे रामेत्यादौ पदत्व तु 'एकदेश'इतिन्यायेन 'सर्वे सर्वपदा' इतिन्यायेन वा । स्थानिन इवादेशस्याप्यर्थवत्त्वमिति तन्न्याय तात्पर्यम् । अत एव स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति दधिमध्वित्यादिवत्तदर्थबोध इत्यनागमकानां सागमका आदेशा इति सिद्धान्तस्तेस्तुरित्यादौ तु कल्पन च सगच्छते । अन्यथा चरितैव सिद्धः पत्र च तत्र स्थानिनोऽर्थवत्त्वेऽपि लोपस्याभावरूपत्वादनर्थकत्वेन तत्कल्पन युक्तमेव । अत एव दीर्घाहो निदाघ इत्यादौ हल्ङ्यादिलोपेन रेफः । न च तयोरितिकतलसुबन्तत्वयोस्तत्प्रयुक्तपदत्वस्य वा तत्र पक्षे तेनाश्रयणे व्यूढोरस्केन द्यौः पन्थाः इत्यादि मूर्द्धाभिषिक्तलक्ष्येष्वप्येव विसर्गान्तनिष्ठाऽन्तत्वादेस्तत्प्रयुक्तत्वादेर्वाऽतिदेशसम्भवेनाल्विधित्वोच्छेद इति वाच्यम् । अत्र भावरूपादेशेन तत्तो वैलक्षण्यात् । आद्येऽन्तवत्त्वस्य तत्र सत्त्वेऽपि तत्त्वेनानिमित्तत्वेनोपजीव्यत्वाच्छ्रौतस्थान्यादेशभावत्यागेनात्वातिदेशेन णत्वप्राप्तया तत्प्रसिद्धेः, अन्यत्र तु स्थानिनामर्थवत्तामुल्लेखेनैव निर्वाहे तथा स्थान्यादेशभावकल्पने मानाभावेन रात्र. कचेरयादा-

शब्दरत्नम् ।

त्तिदत्वस्य स्थानिवत्त्वेन लाभः सुकरः । यदि तु "रोः सुपि" (पा०सू० ८।३।१६) इत्यत्रापि 'रः' इत्यनुवर्त्य रोः रेफस्यैव तेन विसर्गस्तदा ऽत्रुग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम् । तत्रेति । चादिष्वित्यर्थः । वार्त्तिकं नाश्रयणीयमिति । भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेः । निपातानामपि सम्बोधनान्तभवदादिसमानार्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति । "भवदादि" इत्यत्र भोःशब्दस्याप्यादिना ग्रहणात्तत्र भो इत्यादिसिद्धिरिति भावः । अन्यथा—साधारणानामभावे । भा विद्वद्वृन्देति । नपुंसके सोर्लुका लुप्तत्वेन वार्त्तिकाप्रवृत्तेरिति भावः ।

भैरवी ।

माभूत् वृक्षवयतेरप्रत्ययः वृक्षव् करोति" इत्युक्तम् । परोक्तन्दोषमुद्धरति—यदि स्विति । उत्तरार्थम्—हलि सर्वेषामिति सूत्रार्थम् । अवधेयमिति । मूलोक्तार्थावधेयपदार्थं एतावानित्यवधेयमित्यर्थः ।

मूले—अन्यथेति । वार्तिकस्यैव स्वीकारे । इत्यादिसिद्धावपीति । "मतुवसोः" इति सूत्रे पठितस्य तस्य वार्तिकस्यैवान्त्रयाणामन्त्यस्य रुः स्यात्सम्बुद्धौ भवस्य चौदित्यर्थः । तत्र नानर्थके इति परिभाषाया अस्वीकारपक्षे । अलोन्त्यपरिभाषा तु न प्रवर्तते वस्येतिवाच्ये ऽवस्येत्युपादानसामर्थ्यात् । एवञ्च पुंलिङ्गे हल्ङ्यादिलोपेन प्रत्ययलक्षणस्य प्रवृत्तिरिति सिद्धावपीत्यर्थः । भो हरिहरावित्यादि । आद्ये सम्बुद्धिपरत्वाभावात् अन्त्ये सम्बुद्धेर्लुकाऽपहारात् रूपन्न सिद्ध्येदित्यर्थः ।

वार्तिकाभावेऽपि लक्ष्याणां सिद्धिमाह—भोइत्यादौत्यादिना । ननु निपातमात्रस्वीकारे आमन्त्रितकार्यसिद्धिः कथमत आह—निपातानामपीति । सम्बोधनविभक्त्यन्तत्वेन—सम्बोधनविभक्त्येकवचनान्तत्वेन । भ्रआदिसिद्धिमप्याह—भवदादीति । भवदादीत्यत्र—भवदादियोग पूर्वेऽप्यत इत्यत्र । तत्र भोइत्यादीति । आदिना ततो भोः इत्यादिसङ्ग्रहः । साधारणानाम्—सर्व-

भावप्रकाशः ।

दोषमुद्धरतामिममाक्षरीतिमाह—यदि स्विति । उत्तरार्थमिति । हलिसर्वेषामित्येतदर्थमित्यर्थः । अवधेयमिति । मूलोक्तावधेयपदस्वितमेतावदवधेयमित्यर्थः । अनेन सुचितसिद्धान्तरूपवक्ष्यमाणस्यानुपदमेव स्फुटीभविष्यति । सत्रभ्रमन्मुखासाभाव-चादीति । ननु मतुवसोरित्यत्रत्यस्य 'एषां त्रयाणामन्तस्य रुः सम्बुद्धौ नानर्थक इति निषेधाद्वस्येति वाच्ये ऽवस्येति वचनाच्च निर्दिश्यमान' इति न्यायेनावस्योत, इत्यर्थकस्य वार्त्तिकस्याभावे कथन्तत्कार्यतच्छन्दसिद्धिस्तत्र कथम् वस्येति नोक्तं तदसिद्धया गुणाप्राप्त्या रूपासिद्धेरत आह—भोइत्यादीति । ननु तथाप्यामन्त्रितकार्यासिद्धिरत आह—निपातानामपीति । सम्बोधनेति । सम्बोधनविभक्त्येकवचनान्तत्वेनेत्यर्थः । एवं च नासंख्यत्वोक्तिविरोध इति भावः । ननु तथापि लाघवसिद्धिरत आह—भवदादीति । भवदादियोगे इत्यत्रेत्यर्थः । तेषामपरिगणनादिति भावः । आदिना ततो भो इत्यादिसंग्रहः । साधारणानामिति । सर्वलिङ्गसर्ववचनविषयनिपातानामित्यर्थः । वार्त्तिकोक्तानामेवाङ्गीकारे इति भावः । हरिहरावित्यस्य द्विवचनान्ततया भवच्छब्देनानन्यत्वादन्वयासं-

सरला ।

वच्छिन्ने सङ्कोच इति नियमस्यलौकिकनियमानुसारेण "हन्तेः" इतिशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं निर्यामक "अत्पूर्वस्य" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकव्यापकं च रूपं हन्धात्ववयवनत्वं हन्धात्ववयवाकारपूर्वकनत्वं वा । तत्राद्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचे "हन्तेः" इति शास्त्रस्य लक्ष्यमेव किमपि न स्यादिति तद्वैयर्थ्यापत्तिः । द्वितीयधर्मावच्छिन्नातिरिक्तत्वेन संकोचे तु 'अहण्यात्' इत्यादौ "हन्तेः" इत्यस्य प्राप्तिं वारयित्वा "अत्पूर्वस्य" इत्यनेन णत्वं, ननु 'प्रघ्नन्ति' इत्यत्रेति "हन्तेः" इति

